THE

# CHOWKHAMBÁ SANSKRIT SERIES

A

COLLECTION OF RARE & EXTRAORDINARY SA[illegible] WORKS

NO. 42[illegible]

॥ श्रीः ॥

# काव्यमञ्जूषा

नाम

स्वोपज्ञटिप्पणीविभूषित-पण्डितधर्माधिकारिकृष्णपन्तकृत-

रत्नावलीगद्यकाव्य-कामकन्दलनाटक-

श्रीकालिकामन्दाक्रान्ताशतक-

श्रीवेणीरामपन्तधर्माधिकारिविरचित-धर्माधिकारिवंशवर्णन-

श्रीविनायकशास्त्रिवेतालप्रणीत-श्रीरेणुकास्तोत्रनाम्नां

ग्रन्थरत्नानां सङ्ग्रहः ।

# KĀVYA MAÑJŪSA

A Colle on of Poetic Works

Containing

NAVALI, KĀMAKANADALA ( With notes

S'RI KĀLIKĀMANDĀKRĀNTĀ S'ATAKA

By

Pandit Krsna Panta, Dharmādhikari

DHARMĀDHIKARI VAMS'A VARNANA

By

Pandit [illegible], Dharmādhikari

S'RI RENUKA STOTRA

By

Pandit Vinayaka S'astri Vetal

[illegible]HED & SOLD BY THE SECRETARY,
Sanskrit Text [illegible] CHOWKHAMBA SANSKRIT SERIES OFFICE
[illegible]enares City.

1934.

THE

# CHOWKHAMBÂ SANSKRIT SERIES

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

NO. 426.

---

THE

# KĀVYA MAÑJŪSĀ

A Collection of Small Poetic Works

*Containing*

RATNĀVALI, KĀMAKANADALA (with notes)

S'RI KĀLIKĀMANDĀKRĀNTĀ S'ATAKA

By

Pandit Kṛṣṇa Panta, Dharmādhikārī

DHARMĀDHIKĀRIVAMS'A VARṆANA

By

Pandit Veṇi Rāma Panta, Dharmādhikārī

S'RĪ REṆUKĀ STOTRA

By

Pandit Vināyaka S'āstri Vetāl

---

*Edited with a Prefatory Note*

By

**PANDIT ANANTA RĀMA S'ĀSTRĪ VETAL,**

SĀHITYĀCHĀRYA,

*Sanskrit Teacher, Udai Pratâp College,*

*Benares.*

---

1934.




PRINTED-PUBLISHED & SOLD BY

JAI KRISHNADAS-HARIDAS GUPTA

*The Chowkhamba Sanskrit Series Office*

*Benares City.*



Printed by, Jai Krishna Das Gupta
Vidya Vilas Press, Benares City.

1934.

* श्रीः *

चौखम्बा-संस्कृत-ग्रन्थमाला

(ग्रन्थ-संख्या ७८)

नं० ४२६

॥ श्रीः ॥

# काव्यमञ्जूषा

नाम

स्वोपज्ञटिप्पणीविभूषित-पण्डितधर्माधिकारिकृष्णपन्तकृत-

रत्नावलीगद्यकाव्य-कामकन्दलनाटक-

श्रीकालिकामन्दाक्रान्ताशतक-

श्रीवेणीरामपन्तधर्माधिकारिविरचित-धर्माधिकारिवंशवर्णन-

श्रीविनायकशास्त्रिवेतालप्रणीत-श्रीरेणुकास्तोत्रनाम्नां

ग्रन्थरत्नानां सङ्ग्रहः ।

काशिकोदयप्रतापविद्यालये संस्कृताध्यापकेन

साहित्याचार्यपदवीभृता

अनन्तरामशास्त्रिवेतालेन

संशोधितः

भूमिकया च परिष्कृतः ।

---

१९३१.

॥ श्रीः ॥

# किञ्चित्प्रास्ताविकम् ।

## उपक्रमः ।

अथैष प्रकाश्यते मुद्रयित्वा काव्यमञ्जूषा नाम नूतः सङ्ग्रहो ग्रन्थरत्नानाम् । अत्र किल सङ्गृहीतानि रत्नावली कामकन्दलं श्रीकालिकामन्दाक्रान्ताशतकं धर्माधिकारिवंश-वर्णनं श्रीरेणुकास्तोत्रं चेति पञ्चैतानि ग्रन्थरत्नानि । अथ तावदमीषां पञ्चानां ग्रन्थरत्नानां प्रकाशनस्य रुचिरेणावसरेण समुपस्थितमिति महत्तमं सम्मदस्य स्थानम् ।

## ग्रन्थपरिचयः ।

रत्नावली नाम काचिदासीद्गन्धर्वकुमारी । सा किल प्राग्जन्मवासनाबलेन भक्तिमती सपर्यापरा रुचिरेण गीतेन प्रीणयित्वा श्रीमन्तं भगवन्तं रत्नेश्वरं तदीयवरप्रसादादनुरूपं पतिं प्राप्तवती नागराजकुमारं रत्नचूडं नाम । हिमवता शैलराजेन तनूजां पार्वतीमुद्दिश्य काशीमागत्य महारत्नसम्भार आनीतः पुरा कालराजस्योत्तरे स्थापितः । तत्रैव सर्वरत्न-मयं तेजोमयं स्वयमेव प्रादुरभूल्लिङ्गं रत्नेश्वरं नाम ।—इतिहासममुं काशीखण्डोक्तं मूल-भूतमवलम्ब्य तदेव सकौशलं रुचिरेणालङ्कृतिमता सरसेन गद्यबन्धेन सङ्ग्रथ्य श्रीविश्व-नाथान्नपूर्णाढुण्ढिराजकालभैरवदण्डपाणिनामधेयदेवतापञ्चकस्तुतिरूपं मङ्गलाचरणपञ्चक-मादौ पद्यबन्धेन कृत्वा श्रीकाश्या महिमानमतिमानं वर्णयता ग्रन्थकारेण रत्नेश्वरमहि-म्नालङ्कृतो रत्नेश्वरभक्त्या रत्नावल्या नाम्नैव सङ्कीर्तितोऽयं प्रथमो गद्यमयः प्रबन्धः ।

द्वितीये कामकन्दलनाम्नि नाटके कविना वर्णितमेतदित्थमितिवृत्तम्—श्रीपतिशर्मा नाम कश्चिद् ब्राह्मणो विलासी प्रकामानगरीश्वरस्य कामसेनभूपतेर्भवने नृत्यं कुर्वत्याः कामकन्दलाया वारविलासिन्याः सङ्गीतध्वनिं राजद्वारतो निशम्य मार्दङ्गिकस्य वाम-कराङ्गुष्ठहीनतया जायमानविकृतस्वरं मुरजध्वनिं निवेद्य प्रतीहारं, तन्निवेदितेन राज्ञापि सादरमाहूतो वस्त्रालङ्कारैः पूजितः सकलमलङ्कारादिकं राजदत्तं पुरस्तान्नृत्यकलामद्भुतां प्रदर्शयन्त्यै तस्यै गणिकायै दत्तवानिति राज्ञा सक्रोधं निष्कासितो रत्नसेनाख्यसुहृदो गृहं प्रापत । तदनु तस्य साहाय्येन युक्त्या च ससखीजनमुद्याने लतोचितमण्डपं गतायां कामकन्दलायां, तत्प्रियतमे श्रीपतावपि तत्रोद्यानविहारव्याजेन समुपस्थिते, परस्पर-

मनुरागबहुलं भावबन्धं निश्याय तयोरुभयोर्योजितयोः सखीजनेन, तत्राप्यवगतवृत्तान्तेन महीपतिना नगरतो निष्कासितः किञ्चिद्दूरं गत्वा नगरादागतवतः कस्यापि नागरिकस्यागारं गत्वा स्वीयमुदन्तजातं तस्मै निवेदितवान् । तदुक्त्या च विक्रमादित्यस्वामिका मवन्तीनगरीं प्रविष्टवता तेन श्रीपतिना 'महाकालेशदर्शनाय महीपतिर्नित्यमत्रागच्छती'ति तत्र शिवमन्दिरद्वारे "राजन्! गुरुतो धर्मः प्राप्तो ह्यर्थस्तथान्यभूपालात्। कामं त्वत्तो याचे, हीनैतेन त्रिवर्गसम्पत्तिः" इतीदं पद्यं विलिखितं तत्रागतेन राज्ञा च विलोकितम् । ततश्च स्वीयसभामानाय ततो विदित्वा रहस्तदीयं वृत्तान्तं 'कार्यं ते प्रथमं विधास्यामी'ति यथोचितमाश्वास्य तं श्रीपतिं विक्रमार्केण 'कामकन्दला वारवधूरत्र प्रेषणीया युद्धं वा विधातव्य'मिति दूतद्वारा निवेदितसन्देशो राजा कामसेनो नाम प्रकामानगर्यां युद्धायैव सन्नद्धोऽभूत् । उभयोश्च महति सम्प्रवृत्ते सम्पराये पराजितेन कामसेनभूपतिना सादरं समर्पितां कामकन्दलां जग्राह सानन्दं श्रीपतिस्तया समं च सुचिरं विहारसुखमन्वभूदिति । इमां कथामुपजीव्य प्रधाननायिकां कामकन्दलामधिकृत्य कृतोऽयं ग्रन्थस्तदनुरूपमेव च नामोच्चारणं विरचितमिदमीयं कविना । क्वचिच्चात्र स्थले कस्यापि प्रवेशं संसूच्य पुनः स्वयं तद्वर्णनं कविः कृतवानिति वैचित्र्यमुपलभ्यते नाटकान्तरतः । इदं च नाटकं बहुत्र स्थाने नाटकलक्षणेन समन्वितमपि क्वचन तल्लक्षणालक्षितं दृश्यते । मन्ये नाटकमित्यस्य नामधेयं रूपकसाधारण्याभिप्रायेण कविना कल्पितम् । क्वचिद्रूपकोपरूपकसङ्करे शक्योऽन्तर्भावयितुं भेदोऽयं सूक्ष्मया धियाऽवगन्तव्यः ।

तृतीया च कृतिः कवेः श्रीकालिकामन्दाक्रान्ताशतकनाम्नी पद्यमयी रचयितुर्भावगम्भीरसरसकवितारचनाचातुर्यं व्यनक्तितराम् । अत्र किल श्रीकालिकायाः स्तुतिर्मनोहरैः पद्यैरनवद्यैः प्रतिपादिता विद्यते । क्वचित्क्वचित्कवेः कल्पना त्वतीव चमत्करोति चेतांसि सचेतसाम् । अद्य यावदुपलब्धानि प्रायः शतकानि सर्वत्र स्रग्धरायां क्वचन शार्दूलविक्रीडिते च निबद्धानि तत्तत्कविभिः । इदं हि शतकं स्तुतिमयं मन्दाक्रान्तवृत्ते प्रथममेवाद्योपलब्धम् ।

चतुर्थं नानावृत्तमये धर्माधिकारिवंशवर्णने काव्ये लक्ष्मीधरनाम्नो बेदरनगरनिवासिनो मूलपुरुषादारभ्य कविना वेणीरामपन्तधर्माधिकारिणा स्वसमयावधि वर्णितो धर्माधिकारिवंशस्तदुत्तरं च स्वीयसम्बन्धप्रदर्शनपुरःसरमस्मत्पितृवरश्रीविनायकशास्त्रिवेतालपूज्यपादैर्यथोपलब्धं तच्छेषवर्णनं विहितम् । एतद्वंशविषयकं विशिष्य परिचयप्रदानं हि श्रीमल्लक्ष्मीधरपन्तधर्माधिकारिविदुषाऽचिरादेव चिकीर्ष्यत इति तत्र स्थानेऽस्माकमौदासीन्यम् ।

चरमं च स्तोत्रं श्रीमत्या भगवत्याः श्रीरेणुकादेव्याः स्तुतिरूपं कवितामर्मविदां मानसमानन्दयितुं कथं नाम प्रभवतीति त एव प्रष्टव्याः सहृदयशिरोमणयः ।

## ग्रन्थकारपरिचयः ।

प्राथमिकस्य ग्रन्थत्रयस्य निर्माता श्रीधर्माधिकारिकृष्णपन्तपण्डितः स एव सज्जनेन्द्रप्रयोगकल्पद्रुमप्रणेता परिचितचरो नाम चौखम्बासंस्कृतसीरिजग्रन्थमालाग्राहकाणाम् । एतद्विषये हि वक्तव्यं सकलं प्रकाशितचरस्य सज्जनेन्द्रप्रयोगकल्पद्रुमस्य भूमिकायामुक्तमेवेति न पुनस्तदीयावश्यकता । एतस्य विदुषो गुरुरासीद् रङ्कृप्योपनामा बालाजीपण्डितो नाम काशीस्थमहाराष्ट्रब्राह्मण इति रत्नावलीग्रन्थोपक्रमे ग्रन्थकर्त्रैव प्रतिपादितम् । धर्माधिकारिकुलकमलदिवाकरश्रीमन्नन्दपण्डितोत्तरमेकैकपुरुषानन्तरोत्पत्तिक्रमेण वेणीदत्तगोपीनाथढुण्ढिराजानन्तलक्ष्मीधरविश्वनाथवैद्यनाथनामधेयाः पुरुषाः समभूवन् । अत्रान्तिमस्य वैद्यनाथस्य च पुत्रोऽवर्तत श्रीमान् कृष्णपण्डितः प्रस्तुतग्रन्थनिर्मातेत्यसौ नन्दपण्डितान्नवमः पुरुष आसीत् ।

धर्माधिकारिवंशवर्णनप्रणेता पण्डितवेणीरामपन्तधर्माधिकारी तावत् कृष्णपण्डितात्मजकालोपण्डितापरनामधेयकलाधरपन्तपण्डितादुत्पद्यते स्म । अस्य हि पितामहः कृष्णपण्डितो नन्दपण्डितपौत्रस्य गोपीनाथस्य प्रथमः पुत्र आसीत् । इत्थं च नन्दपण्डितादयं षष्ठः पुरुषोऽजायत ग्रन्थकर्ता । अस्य च योग्यताविषये धर्माधिकारिवंशवर्णनपरो ग्रन्थ एवायं परिचायको भवेन्नूनं पाठकमहाभागानाम् ।

एतस्य सुधियो हि समयमीमांसायामुपस्थितायां, प्रतिपुरुषं पुरुषान्तरोत्पत्तौ स्थूलमानेन त्रिंशद्वर्षात्मकस्य समयस्य कल्पनायां क्रियमाणायां वैक्रमैकोनविंशशतकोत्तरार्धान्तिमभागे जन्मलाभं कृतवतो रत्नावल्यादिग्रन्थकर्तुः श्रीकृष्णपण्डितात् प्राचीनस्य नवमस्य पुरुषस्य तावन्नन्दपण्डितस्य समयो निःसंशयं सप्तदशशतकपूर्वार्धस्य मध्यभागः शक्यतेक ल्पयितुम् । अमुष्या एव कल्पनाया अवलम्बेन श्रीमन्नन्दविदुषः षष्ठपुरुषस्य वेणीरामपण्डितस्य समयोऽवधार्यतेऽष्टादशशतकस्यान्तिमो भागः । एतेन वक्रमैकोनविंशशतकस्य पूर्वार्धे स्थितिरेतस्य विदुषो निर्विवादं सिध्यति ।

श्रीरेणुकास्तुतिं विरचितवान् श्रीमान् स्वधमधुरन्धरदैवज्ञवाचस्पतिज्यौतिष्पारदृश्वा वेतालकुलकैरवसुधाकरो विनायकशास्त्री नाम सुगृहीतनामासीत् । श्रीमद्रामपण्डितात्मजनन्दाग्रजश्रीगोविन्दपण्डितस्य पुत्रो मेघनाथस्तदात्मजो बालकृष्णो द्वितीयस्तत्तनयो मुकुन्दस्तत्सुतस्तृतीयो वासुदेवो नाम श्रीकृष्णजनकोऽभूत् । अर्थादयं वासुदेवसुतः श्रीकृष्णो [गोविन्दपन्तविदुषः श्रीमन्नन्दबन्धोरासीत् षष्ठः पुरुषः । एतस्य खलु श्रीकृष्णविदुषः सुतायां सगुणाख्यायाम् ( अस्मत्पितुर्मातमहस्य मातरि ) शेषोपनामकवेणीरामपण्डितादजनि पण्डितो राजाराममामा । अमुतो हि गङ्गाभिधानायां पत्न्यामुद्भूता लक्ष्मीर्नाम कन्या जनन्यासीदेतद्ग्रन्थकर्तुर्विनायकशास्त्रिणोऽस्मत्पितुः । पञ्चाङ्गपाटीसंग्रहे-

कादशीनिर्णयादिप्रणेतुर्जैमिनिसूत्रलघुपाराशर्यादिटीकाकर्तुरेतस्य विदुषो ज्यौतिषे शास्त्रे शास्त्रान्तरे च पाण्डित्यातिशयमुद्दिश्य किमत्रोल्लेखनीयं नाम । तत्र तत्र प्रसिद्धा कीर्तिरेव तत्परिचायिकेत्यलं तत्प्रदर्शनप्रयासेन । भवर्तुनन्दमेदिनीमिते हि वैक्रमे वत्सरे परमं पदं प्राप्तवानयं पुष्करक्षेत्रे विद्वद्वरः ।

श्रीमन्नन्दपण्डितपौत्रस्य गोपीनाथपण्डितस्यासीत्पुत्रद्वयम् । तत्र द्वितीयस्य दुण्ढिराजस्य वंशे कृष्णपण्डितोऽभूत्प्रथमस्य श्रीकृष्णस्य च वेणीरामपण्डितः । श्रीविनायकशास्त्री तु नन्दबन्धोर्गोविन्दस्य वंशे समुदपद्यतेत्येकान्वयसम्बन्धसूत्रस्यूतास्त्रयोऽप्यमी ग्रन्थकाराः ।

## उपसंहारः ।

रत्नावली श्रीकालिकामन्दाक्रान्ताशतकं श्रीरेणुकास्तोत्रं चेति पुस्तकत्रयमस्मद्गृह एवोपलब्धमासीत् । कामकन्दलं नाटकं धर्माधिकारिवंशवर्णनं च मित्रवरश्रीलक्ष्मीधरपन्तविदुषा सस्नेहमस्मभ्यं प्रकाशयितुं प्रदत्तमित्युपकारभारं स्मारं स्मारं तादृशोदारताविषये तस्मै सवयसे हार्दिकान्धन्यवादाननेकान् वितरामः । अन्येऽपि ये केचन कार्येऽस्मिन् कयापि विधया साहाय्यमाचरन् , सद्भावेन मनसा तेऽपि स्मर्यन्ते साम्प्रतंस्नेहशालिनः । अन्ते च श्रीमद्गुरुतरचरणस्मरणमहिम्ना कार्यमिदमङ्गीकृतं समाप्तेः पदं नीत्वा विरमामि वृथाविस्तरादिति शम् ।

अधिकवैशाखशुक्लैकादशी,
संवत् १९९१, काशी ।

विदुषां विधेयः—
**अनन्तरामशास्त्री वेतालः ।**

॥ श्रीः ॥

धर्माधिकारिकृष्णपण्डितविरचिता

# रत्नावली ।



गौरीप्रेमानुबन्धत्रिभुवनजनताभक्तिभावातिरेक-
ब्रह्मेन्द्रोपेन्द्रचन्द्रप्रमुखसुरतपःसञ्चयैर्निर्गुणोऽपि ।
पञ्चक्रोशात्मकं यः सुरधुनिविलसद्दृश्यमानं स्वरूपं
बिभ्रच्छ्रीविश्वनाथः स भवतु भवतां भावुकोद्रेकदाता ॥ १ ॥

पायान्नः साऽन्नपूर्णा, प्रतिदिवसमहिद्विण्मुखादित्यसङ्घा(१)
यस्याः पादप्रणामे नखशशिनि चिरं सुप्रशस्ताननेकान् ।
ब्रह्माण्डानां समूहानपरसुरगणासेवितान् संविलोक्या-
श्चर्यं वै मन्यमाना निगममनुगणैः संस्तुवन्ति.प्रकामम् ॥ २ ॥

उद्दामोत्तुङ्गमूषाधिपयुगलसमाकृष्टिझाङ्कारनाद-
क्षुभ्यद्दैत्यारिदष्टच्छविललिततरस्यन्दनेन्द्राधिरूढः ।
लोलत्कर्णाभिघातोद्धतमदसलिलामोदमाद्यद्द्विरेफ-
व्रातोद्गीतस्तवो नः स दहतु कलुषं ढुण्ढिराजो गणेशः ॥ ३ ॥

यः प्रादुर्भूय रोषान्निजखरनखराग्रेण वैधात्रशीर्षं
चिच्छेदेशाननिन्दाकरमथ शिवतः प्राप्य काश्याधिपत्यम् ।
तत्रत्यानां जनानां कलिकलुषधियां सच्चिदानन्दरूपं
कर्तुं पापानि शास्त्या(२) दहति, स भवताद् भूतये कालराजः॥४॥

यः संभ्रमोद्भ्रमगणानुगतोऽविमुक्ते विघ्नं हरत्यनुदिनं भवभक्तिभाजाम् ।
ज्ञानप्रदोऽस्मद इति प्रथितः स पायाद्देवः शिवप्रियतरो बत दण्डपाणिः॥५॥

---

(१) इन्द्रादिदेवसमूहाः । (२) यातनादानेन ।

वन्दे निर्जितनन्दनावनिरुहाऽच्छाच्छप्रसूनोच्छल-
न्माध्वीकद्रववाक्प्रपञ्चवशितप्राज्ञेन्द्रसन्मण्डलम् ।
कारुण्यार्द्रकटाक्षजातसुबृहच्छास्त्राब्धिपारङ्गम-
च्छात्रौघं बत रङ्गपाभिधमहं बालाजिविज्ञं गुरुम् ॥ ६ ॥

परनाशे कर्तव्ये पिशुनानां भवति पटुधिषणा ।
सम्भवति मूषकाणामतिबुद्धिर्वस्तुकर्तने च यथा ॥ ७ ॥
अपि दुर्जनाभिभूतः स्वगुणख्यातिं करोति वै सुजनः ।
किं धनिको दस्युभयान्न निजैश्वर्यं प्रकाशयति? ॥ ८ ॥
दुर्जनमत्तवराहः सज्जनगुणसरसि विमलतमे ।
अवगाह्यापि पिशुनताकर्दममलिनः पुनर्भवति ॥ ९ ॥
सन्तः परोपकृतये जीवितमपि संत्यजन्ति तृणवत् स्वम् ।
त्यक्तं दधीचिमुनिना सुरकार्यार्थं निजास्थिदानेन ॥ १० ॥
दुष्टमपि साधुसङ्गाच्छुभतामेति च विहाय निजदौष्ट्यम् ।
तैलमनाप्रेयमपि हि सुमनःसङ्गाद्भवति हृदयहारि ॥ ११ ॥
मृदुलं सज्जनहृदयं नवनीतादपि भवत्यहो! नितराम् ।
परतापदर्शनेन द्रवति हि, तन्नैव नवनीतम् ॥ १२ ॥

प्राक्काशीस्थरसाऽमरैरधिकृतो धर्माधिकारीति य-
स्तद्वंशाम्बुधिजातमौक्तिकमणिः श्रीवैद्यनाथः कृती ।
तत्सूनुर्विदुषां समाजरसिको यः कृष्णशर्मा कवि-
स्तेनेयं प्रवितन्यते रसमयी रत्नावली सत्कथा ॥ १३ ॥

शुभालङ्कारा(१)ढ्या पिहितरसभावा गुण(२)वती
सुरीति(३)प्रख्याता मृदुलपद(४)विन्यासशुभगा ।

---

( १ ) उपमादय आभरणानि च ।
( २ ) श्लेषप्रसादादयः शीलादयश्च ।
( ३ ) अवयवसंस्थानविशेषा व्यवहाराश्च ।
( ४ ) सुप्तिङन्तानि चरणौ च ।

नवोढा कान्तस्य श्रवणमधुरैर्वाक्यरचनै-
र्यथा रागोद्रेकं जनयति तथा सत्कविकथा ॥ १४ ॥
पुरा कथा दण्डिसुबन्धुबाणादयो ह्यनेके कवयो वितेनुः ।
तथा कथा मे न,तथापि धीरै रत्नेशमाहात्म्यवतीति दृश्या ॥१५॥

अस्ति स्वस्तिसमस्तस्थिरास्थलीविस्तृतमस्तकसंस्तुतप्रस्तारप्रशस्ति-स्तोमाऽहर्दिवं वर्धमानाऽपूर्वपूर्वैहिकजन्यर्जितधर्मार्थकामनिर्वाणसम्पूर्णसर्व-वर्णाश्रमधर्मकर्मप्रसितत्वा(१)खर्वगर्वखर्वीकृतसुपर्वदर्पोर्वीसुपर्वादिपर्वितैः(२) उल्लसिताचलकल्पबहलबलाहककुलोल्लम्बन(३)तुलितातिवेलावलिप्तशैला-कलनकुशलमुसलिसोदरैः (४) अगणितकिरणचणाऽऽपणमणिगणजटितक-पाटघटितप्रकटगवाक्षश्रेणीप्रतिच्छायित(५)सहस्राक्षैः कियद्वातायनगतयुव-तिजनवदनविलोकनजनितकुवलयितपल्वलसन्दोहसन्देहलुब्धमधुपसमुदय-समुदिताभैः तरलतरमधुकरनमितसुकुमारलघुतरुवीरुन्मञ्चिकाऽञ्चितकान्ता-लवालविलसितवलभीकैः गृहकर्मतत्परस्वनिस्रस्तवसनस्तनकलशदर्शनत्रप-नेङ्गितलज्जितनिजमन्दिरसुन्दरीकपटकुपितकटाक्षपातमुदिततरुणगणाञ्चिता-ऽट्टैः वारनारीनिकरैरिव तत्परच्छेकैः (६) सुरलोकैरिव लेखा(७)भिरामैः सुग्रीवसैनिकैरिव पुरःस्थितहनुमद्भिः (८) तान्त्रिकजनैरिव सावेशनैः(९) सावरोधै(१०)रप्यनवरोधैः(११) अनकूपारैरपि निम्नाकूपारै(१२)र्मन्दिर-विसरैरुज्जृम्भिता, हृतसकलजनताचित्तमधुरमधुरमुरजनिस्वनातिवेलललित-वीणानिक्वाणसमीचीनविपञ्चीनिनादमाधुर्यहृद्यघनध्वनिसुविकस्वरसप्तस्वर-मञ्जुसङ्गीतगुञ्जिताभिः समग्रब्रह्माण्डभाण्डाखण्डप्रचण्डविघ्नखण्डनसु-पण्डोद्दण्डचण्डशुण्डादण्डाभिरामढुण्ढिराजादिवेतण्डतुण्डमूर्तिमण्डिताभिः

---

(१) तत्परत्वम् । (२) पूर्णैः । (३) उत्तोलनम् । (४) कृष्णः ।
(५) उपमितः । (६) व्यसनिनो गृहासक्तपक्षिणश्च ।
(७) देवाश्चित्राणि च । (८) मारुतिर्हट्टविलासिनी च ।
(९) भूताविष्टाः शिल्पशालाश्च । (१०) अन्तःपुरम् ।
(११) अप्रतिबन्धः । (१२) अन्धवः ।

निखिलदिक्करटिकरटतटपाटनलम्पटपटुरवघटितविकटपाञ्चजन्यशङ्खेन चङ्क्रमणचमत्कारचकितशचीशाऽरि(१)चयोच्चमस्तकच्छेदनपरिचितचातुरीरुचिरसुदर्शनचक्रेण समददैतेयकुलदलनदीक्षादानदक्षोद्यदुद्दामकौमोदकीगदया सान्द्रामन्दानन्देन्दिरान्वितसुन्दरपादारविन्दद्वन्द्वोद्यन्मकरन्दबिन्दुसन्दोहास्वादनलुब्धभ्रमदिन्दिन्दिरायमाणभक्तवृन्दाऽवनदयाङ्कुरप्रोद्यत्पद्मेन च विराजितकरचतुष्टयैः शम्पासहसभासुरपीताम्बरधरैः नव्यमुदिरबन्धुराङ्गद्युतिद्योतैः बिन्दुमाधवगोविन्दप्रतिमानैः पूरिताभिः सुरुचिरहरिततरमरकतखचितचारुरुक्मोरुवलयाकारैः अखर्वहारिताऽर्वयुक्तरथपरिगततिमिरहरकरनिकरलोलार्कप्रमुखमिहिरबिम्बैर्विम्बिताभिः प्रवृद्धयुद्धोद्धवलुब्धबुद्धिसन्नद्धसकन्ध(२)बद्धकञ्चुकमदोद्धतोद्भूतातिक्रोधदन्तविद्धाधरदैतेयाधिनाथनोदिताऽनन्तदन्तावलस्यन्दनसैन्धवपदगसमुदयोपद्रवदलितमेदिनीतलगतजगदवनावेगविधूतविविधनारकण्ठीरव(४)भौदार(५)शाङ्कर(६)कौमारपौरन्दर(७)वैरञ्च(८)चामुण्ड(९)कालेय(१०)प्रमुखावतारदुर्गादेव्यादिसंदीपिताभिः अपारसंसारनिस्तारकारचित्साराविस्तारदग्धमारनागहारतारितभूभारगरलाहारभस्मालङ्कारगौरीदारकेदारप्रभृतिशङ्करलिङ्गालिङ्गिताभिः शया(११)श्लिष्टशिक्षितासंख्यब्रह्मपेशी(१२)जाताति चतुर्दशभुवनमहत्पीनोन्नततेजोजटालकरालकालदण्डाभिः अभ्रभ्रान्तनूत्नोदितमृगाङ्कपिङ्गाभकपर्दभाराभिः प्रतिकल्पागण्यस्वायम्भुवमुण्डपुण्डरीकस्रक्परिष्कृतवक्षःस्थलाभिः कालभैरवादिमूर्तिभिर्भूषिताभिः अधरीकृतसौध(१३)माधुर्यगान्धर्ववेदादिविद्यावादोपदेशसञ्जातविद्वद्वृन्दवन्दितान्तेवासिसन्दोहनमस्यागतद्विजोत्तमद्योतिताभिः वानरचमूभिरिवाङ्गदो(१४)ज्ज्वलाभिः समददन्तिगतिभिरिव सघण्टाघोषाभी राज्याभिषेकसामग्रीभिरिव सकनककलशाभिः कौन्तेयततिभिरिव पाञ्चा-

(१) दैत्यः । (२) अश्वः । (३) सम्यग् गर्वो येषां ते ।
(४) नारसिंहीशक्तिरूपा । (५) वाराही । (६) माहेश्वरी ।
(७) इन्द्राणी । (८) ब्राह्मी । (९) चामुण्डा ।
(१०) काली । (११) हस्तः । (१२) ब्रह्माण्डम् ।
(१३) सुधाया इदम् । (१४) वालिपुत्रः कर्पूरश्च ।

ली(१)मनोहराभिर्विष्णुमूर्तिभिरिव वैजयन्ती(२)भूषिताभिर्देवालयमालाभि-रुल्लासिता, विविधकुसुमसुषमसुरभिलुभ्यच्चञ्चलतरचञ्चरीकचयसप्तस्वरल-लित'झंझी'गुञ्जितवीणाविपञ्चीनिकणैः समीररिङ्गत्तुङ्गतरकासारसलिलतरङ्ग-तीराघातजातनादसाधुतालमानैः सरसशिञ्जल्लीझाङ्कारमञ्जुलमञ्जीरसिञ्जितैः विषमशरसमाक्रान्तसीमन्तिनीसक्तकपोतकलरवघुटुकनमृदुमृदङ्गनिनदैः मो-हितसकलशकुन्तसमवायसुलयकलकण्ठकलरुतगानैः घनतरनिस्तरलजलध-रपटलविसृष्टघनरसाऽऽसारसिक्तसकलशरीरमयूरनिकरनर्तकनर्तनैः मरुदी-रितसुरसविकासितकुसुमहसितसरसवल्लरीसुन्दरी(३)वृन्दालिङ्गितविशाल-शालरसालपाटलबकुलनिचुलपिचुलमन्दारकन्दरालकदम्बजम्बूकर्कन्धूबन्धूक-दाडिमकुटजनारिङ्गनारिकेलपिप्पलबिल्वामलकमुनिकाञ्चनारप्रभृतिबहुविध-तरुवरसामाजिकैः सुन्दररङ्गाजिरायितैः आरामवारैरलङ्कृता, रजनिकरभा-सुरयज्ञसूत्रराजितोरःस्थलैः शारदमुदिरपाण्डुरातिपवित्रभस्मार्चितमालैः रु-चिररागरञ्जितपट्टाम्बरधरैः धरणिसुरवरनिकरैः अनवरतकृतपरिचर्यया स्ना-नागतनागरयौवतोन्नतपीनवक्षोजक्षोभप्रकुंस(४)लीलायितवीचिमालाविला-सितया विमलबहलसंलोलकल्लोलमालान्दोलितैस्तरणलीलालुब्धैस्तरलतरा-ऽनल्पबालककुलैर्ललितकूलया रमणीयारोहण(५)निश्रेणि(६)श्रेणीशोभित-मर्दितदुर्गदर्पोरूद्दण्डसुदृढघट्ट(७)घटितप्रकटाऽविकटतटया सकृदवगाहन-जनितसुकृतातिरेककृतभासितभूतिधृतशूलकलितकपालकण्ठेकालव्यालमाल-सानलभालशिवरूपसकललोकशशिसहस्रभासुरसलिलया कोटिजन्यर्जितधर्म-लभ्यप्रतिपदात्यर्थतीर्थसार्थसार्थकीकृतपुमर्थानवरताचरितपरिपूरिततपःसम्प-द्भिश्चम्भरप्रभृतिप्रार्थितमनोरथमणिकर्णिकासमागमसामोदजातरूपायितमाहा-त्म्या विटपिशाखयेवाण्डज(८)भूषितया राजपूतनयेव कम्बु(९)शोभितया

(१) द्रौपदी पुत्तलिका च । (२) माला पताका च ।
(३) वल्लर्य एव सुन्दर्यः । (४) नर्तकः ।
(५) सोपानम् । (६) अधिरोहणी ।
(७) जलावतारः । (८) मत्स्यः पक्षी च ।
(९) गजः शङ्खश्च ।

विमलगगनमण्डलस्येव सरत्तरणि(१)मण्डितया श्लेषालङ्कृत्येव स(२)भङ्गया रथावस्थेव अमन्दचक्र(३)ङ्गया राजसभयेव जीवनेह(४)द्विजाश्रितया गङ्गया परिष्कृता प्रलयेऽप्यनश्वरा विश्वेश्वरराजधानी नगरी गरीयसी वाराणसी नाम ।

या चैकरूपापि क्षेत्रभूतैरन्तरान्तरभवैश्चतुरपघनै(५)र्निर्वाणचतुष्क विश्राणनकारणैश्चतुःस्वरूपा । तथा हि—कनकाद्रेरिव विपुलावलयकेन्द्र(६)वर्तिनो मध्यवर्तिनो मध्यमेश्वरात्प्रतीचीनदेहलीहेरम्बावधि वितानितस्य सूत्रस्य पञ्चक्रोशायामस्य चक्रवालाकृत्या भ्रान्त्या मीयमानबाह्यसीमवलया वितन्वती सालोक्यं काशीति । तदन्तर्वर्तिनी पुमर्थसार्थप्रदतीर्थराजवास्तव्यस्य स्वस्तिकासिको(७)पविष्टस्य विष्टरश्रवसः(८) काशीनिविष्टदृष्टेः सव्यसव्येतरचरणापसृताभ्यां सुरधुनीसङ्गताभ्याम् अवागुदक्सीमभ्याम् असिवरणापगाभ्यां प्राक्प्रत्यक्सीमभ्यां जन्हुमुनितनयादेहलीशिवतनयाभ्यां च परिच्छिन्ना सामीप्यमातन्वाना वाराणसीति । तदन्तः प्राच्यादिहरिच्चतुष्टयनिष्ठप्रतीहारप्रतिवेशिभिः(९) क्षेत्ररक्षणदक्षिणैः पाशासिसनाथशयकमलकोटिगणपरिवृतैः अट्टहासेशभूतधात्रीशगोकर्णेशघण्टाकर्णेशैर्बद्धधारणा (१०) सारूप्यदा अविमुक्ताख्येति । तदुदरगता मणिकर्णीशब्रह्मेशगोकर्णेशभारभूतेशैः कल्पितपूर्वादिसीमान्ता सायुज्ययोजिका अन्तर्गृहाख्येति ।

एवं चतुष्प्रतीकायां नगर्यां सर्वान्तर्गतान्तर्गृहाख्यक्षेत्रवराधिष्ठिते अगणितापणमणिगणखचितकनकशिखरविकीर्णकिरणशक्रचापसच्छाय(११)च्छायापूरितदिगन्तराले क्षणमात्राचरितजपहोमध्यानादिकर्मसम्पाद्यमानसहस्र-

---

(१) सूर्यो नौका च । (२) अलङ्कारभेदस्तरङ्गश्च ।
(३) चक्रं कोकश्च । (४) जलेच्छुपक्षिणो वृत्तीच्छुब्राह्मणाश्च ।
(५) चतुरवयवैः । (६) मध्यम् । (७) स्वस्तिकासनम् ।
(८) विष्णोः । (९) द्वारसमीपे विद्यमानैः ।
(१०) मर्यादा । (११) सदृशम् ।

समा(१)सम्पादनीयश्रेयःसम्पदि अविरतसमाधिसम्पन्नसनकादिमुनिसंसेविते अभिषेकागतासङ्ख्यर्षिमुनिविप्रवदनोद्गीर्णशतरुद्रियादिस्वरसम्पादिते विकट-तुण्डप्रचण्डभृङ्गिरिटिप्रभृतिगणकठिनदण्डताडनपराभूताऽहमहमिकापतद्द्-र्शनलालसशतमन्युप्रमुखलेख(२)वृन्दजुष्टद्वारचतुष्टये वाताहतिकम्पनैर्निवा-रयन्तीभिरिव पातकततिं पताकाभिरुत्तंसिते दर्शनमात्रेण कृतार्थयद्भिर्निधा-नकलशप्रदैर्निचितद्युमणिगणैरिव मणिमयकलशैः शोभितशिखरे विचित्र-रचनचमत्कृतरत्नहेमस्तम्भशतभूषितप्रतीच्यादिदिक्चतुष्टयगतयथार्थाभि-धशृङ्गारैश्वर्यज्ञाननिर्वाणमण्डपचतुष्कभूषिते श्रुतिशिरसीवाद्वैतज्ञानप्रकाशके आराम इव मालिका(३)धिष्ठितप्रान्तभागे मेराविव कनकरत्नाशिखरे उन्नते च महाभारत इव धर्म(४)कथापूरिते वर्णितपाञ्चालिके च मणिहेमबद्धे-ऽपि मुक्तिप्रदे असूर्येऽपि तमो(५)नाशके मोक्षलक्ष्मीविलासनामधेये प्रासा-दवरिष्ठे सर्वदा कृताधिष्ठानोऽपि भगवान् चतुर्मुखप्रमुखानवाप्तसमाप्तिश्रु-तिसमूहाऽलब्धान्तमहिमसमूहो निखिलभुवनोद्धरणनिमित्तविधृतलिङ्गरूपो ब्रह्माण्डस्तूप(६) इव बृहद्वपुर्धारको भक्तजनदुःखहारको दीनानाथैकशरणं जगत्कारणकारणं विधृतजटाभारः समुद्धृतभूभारः पञ्चवदनः पञ्चदश-नयनः (७) सर्ववरप्रदायको दग्धपुष्पसायको निखिललोकपालकस्त्यक्त-मायाजालकः कल्पितानेकब्रह्माण्डः कल्पान्तकृत्यभेरुण्डः (८)कृतविवि-धरूपविस्तरो जगद्भयगरलघस्मरो निर्वाणदीक्षागुरुर्विध्वस्तदक्षस्वरु(९)-श्चन्द्र इव कलितमृगश्चन्दनतरुरिव व्यालाभरणो रत्नसानुरिव सुरधुनि-धारालङ्कृतशेखरः सूत्रधार इव शैलूष(१०)प्रियो व्यवहारीव कपर्द(११)-भाराश्रितः समुद्र इव कौशिकी(१२)सङ्गममुदितो वेद इव वृष(१३)ध-

---

(१) वर्षम्। (२) देवाः। (३) मालाकारः।
(४) युधिष्ठिरः सुकृतं च। (५) अज्ञानम्।
(६) स्तम्भः। (७) प्रतिमुखस्य त्रिनेत्रत्वात्।
(८) भयङ्करः। (९) यज्ञः।
(१०) नटो बिल्वश्च। (११) वराटको जटाजूटश्च।
(१२) नदी गौरी च। (१३) धर्मो नन्दी च।

ङ्गारः श्मशानवास्यपि मङ्गलमूर्तिरनामयोऽपि शूली(१)धर्मिष्ठोऽपि मातुलानी(२)रसिकोऽनक्षदेव्यपि धूर्त(३)प्रियः स्थाणुरपि वाञ्छितफलदोऽस्थिनेपथ्योऽपि पवित्रः सर्वसंहर्तापि न पातकी विषमेक्षणोऽपि समदृष्टिः सुलोचनोऽपि विरूपाक्षो विषाद्यप्यविषादी विषनिगरणकृष्णकन्धरः शरणागतवज्रपञ्जरश्चूडामणीकृतनिशापतिः काशीपतिरन्नपूर्णासनाथो विश्वनाथो रुचिरचरणकमलषट्पदायमानभक्तजनतपःसम्पत्फलवितरणायाऽपि वाराणसि स्थाने स्थाने लिङ्गरूपेण प्रादुर्बभूव । एवं भक्तजनार्पितस्वसात्कृतवस्तुन्यपि लिङ्गरूपेण प्रादुरास्ते ।

एवमेवैकदा यातेन काशीं पाणिपीडनकालादनुपलब्धतनयोदन्तेन मेनकानाथेन तुषारगिरिणोपगन्तुं तदीयप्रवृत्तिं निरूपितजामातृसम्पदुत्कर्षेण जातमन्दाक्षेणानवलोक्य तनयासनाथं विश्वनाथं जामातरम् आप्लुत्य पुण्यप्रदे पञ्चनदे कालराजोत्तरे नातिदूरे अलिकुलमलिनकमलकुमुदकल्हारकोकनदेन्दीवरनिकरपिहिततदीयमकरन्दपुनरुक्तमधुरिमाविमलशीतलाऽतलस्पर्शवारिपूरितायां हंससारसरथाङ्गकुररनिकुरम्बमण्डितायां दिविषदामिव भुविषदां प्रावनाय(४) विहाय विहायसः स्थितिमाधिकाशि स्थितायां हरस्य गगनमूर्तेर्दर्पणायमानायां मन्दाकिन्या अतिविस्तरे प्रतीरे राशीकृत्यानीतोपायनरत्नानि प्रतिष्ठाप्य स्वनाम्ना वरणारोधसि रात्रिमात्रनिर्मिते प्रासादे शैलेश्वरं लिङ्गं विलिख्य च तत्र स्वप्रशस्तिं स्वविषयः(५) समव्रजि । प्रातर्विलोक्यादृष्टपूर्वंदिवसं सप्रासादं महालिङ्गं विस्मितयोर्ढुण्डनमुण्डनगणयोर्मुखान्निशम्य विश्वनाथ आर्यायै निजभार्यायै प्रियायै तत्तनयायै प्रदर्शयितुमागत्य तल्लिङ्गे निजवसतिं वरं प्रदाय यदृच्छया कालभैरवोदङ्मन्दाकिनीरोधस्याजगाम । तत्र च तस्मिन् रत्नराशौ विश्वेश्वरसात्कृते सुकृतोदयादद्रिराजस्य पुरन्दरकोदण्डद्युतिज्वालाजटिलितगगनतलं स्फुरत्प्रभाभासितदशाशं सर्वरत्नमयं सर्वरत्नप्रभं सर्वरत्नप्रदं मनोहरं मनोरथपूरकं प्रादुरभूल्लिङ्गं रत्नेश्वरं नाम ।

(१) रोगः त्रिशूलं च । (२) विजया । (३) कितवो धत्तूरश्च । (४) रक्षणाय । (५) देशः ।

यस्य च सकृत्सपर्यया सप्तसिन्धुवेलामेखलावलयितेला(१)धिपत्यं करतलगतमञ्जसोपजायते। तदपूर्वं लिङ्गं निभाल्य विस्मितया प्रियया गिरिजयाऽनुयुक्तेन तस्य रत्नेश्वरस्य लिङ्गवरस्य महिमानमतिमानमुपवर्णयता निजाननेन विश्वनाथेन चित्तहरमपूर्वं चित्रतमं पुरावृत्तमभाणि । तथा हि—

आसीद्गन्धर्वराजो गन्धर्वलोकवास्तव्यः(२) स्तव्यगुणगणः सकलविद्याचणः कलाकलापकुशलः कुशली स्फुरत्कीर्तिप्रतापः स्फूर्तिमच्छौर्यत्रिको वसुपूर्णो वसुभूतिर्नाम । यश्च प्रावृट्काल इव सततघनानद्धः(३) कर्ता कलाशास्त्राणां भर्ता गन्धर्वाणामाहर्ता गुणानां संहर्ता दोषाणामुपहर्ताऽभिलषितानाम् । तस्य सुविनया तनया लावण्यवतीष्वग्रगण्या जितचन्दिर(४)मुखारविन्दा स्तबकस्तनी मृणालकोमलबाहुलता तन्वी तनुमध्याऽधरीकृतबिम्बाधरा मीनाभिमानमोचनलोचना विकलीकृतकोकिलालापा सर्वगान्धर्वनिपुणा गुणरत्नगञ्जा(५)ऽनुपमेयरूपातिशया मूर्तेव रत्नाकरकन्यका बभूव रत्नावली नाम ।

या च सन्ध्येव विविधरागरक्ताम्बरा(६) कवितेवालङ्कार(७)मण्डिता तरुशाखेव रुचिरवयो(८)भूषिता कलावत्यपि नकलावती(९) गन्धर्व्यपि(१०) नगन्धर्वी(११) । यस्याश्चञ्चलत्वं नयनयोर्न चेतसि, मन्थरत्वं पादयोर्न बुद्धौ, कार्श्यं वलग्ने न वपुषि, मौग्ध्यं शिशुक्रीडने न विद्यासु । तस्यास्तिस्रश्छाया इव दिवसेऽनुगामिन्यो निशि कोक्य इव वियोगिन्योऽनुत्सृष्टैकाकिन्यः समानवयोरूपलावण्यगुणाश्चारुचातुर्यचणाः शशिलेखानङ्गलेखाचित्रलेखाः सततसहशिशुखेलाः सख्य आसन् । अकारि चैकत्र ताभिः परिशीलनं वाचां देव्याः । प्रीतया च तया वाग्देवतया ताभ्यः सकलकला व्यतारि ।

---

(१) पृथ्वी । (२) वसतीति वास्तव्यः ।
(३) निरन्तरं मेघाच्छन्नः वीणातालमृदङ्गसहितश्च ।
(४) चन्द्रः । (५) खनिः । (६) आकाशं वस्त्रं च ।
(७) भूषणान्युपमादयश्च । (८) पक्षी अवस्था च ।
(९) तुम्बुरुवीणा । (१०) गन्धर्वजातीया । (११) अश्वी ।

अथ सा रत्नावली प्राग्जनुषि कलावत्यभिधनर्तक्याख्ये सकृत्तपस्ये मासि शिवरात्रिजागरे कृतरुचिरतौर्यत्रिकेण परिप्रीणितस्य रत्नेश्वरस्य प्रसादाऽऽत्तवासनावशेनाऽग्रहीत्ससंयमं (१) नियमम् 'अपचितिमन्तरेण रत्नेश्वरस्य व्याहृति(२)विसर्जनं न करिष्य' इति । ततःप्रभृति ताभिरालीभिः सहान्वहमायामिना गगनाध्वनाऽविमुक्ते समागत्य रत्नभूतस्य रत्नेश्वरस्य नमस्यामकरोत् । अन्यदानन्दवनमभ्येत्य विविधार्चनोपचारैराराध्य जगदीशं रत्नेन रत्नावली तदीयपुरतो रम्येण लयेन मञ्जुलेन तालेनाऽनुपमेन ताननातुच्छया मूर्छनया विकस्वरेण सप्तस्वरेण सानुरागेण रागेणाऽविगीतानि (३) गीतानि जगौ । सख्यश्च निरगुर्जगत्साक्षिणं त्रीक्षणं(४) प्रदक्षिणीकर्तुम् । अत्रान्तरे प्रत्नेश्वरो रत्नेश्वरस्तदीयगानमुदितो वरदीभूय लिङ्गादेवावदत्—'अयि सुकुमारिके ! गन्धर्वकुमारिके ! अद्याऽधिरजनि अनङ्गरङ्गकुतुकेन रुचिरमूर्तिर्यस्त्वां रमयिष्यति, स तव नामसमाननामा दयितस्ते भविते'ति । एतन्निजगीतमन्दरमथितलिङ्गोदन्वदुदितमुक्तिपीयूषमापीयाऽमन्दानन्दसन्दोहमेदुरा मन्दाक्षमीलिताक्षी च बभूव । तदनु यथागतं तारापथपथेन सह सखीभिर्निजोदन्तं रत्नेशोदितं निगदन्ती चचाल निजालयम् । अभिनन्दिता च वयस्याभिः 'दिष्ट्या कुसुमितोऽद्य ते रत्नेशपरिचर्यातरुर्भविता च फलितोऽपि विभावर्या'मिति । 'अयि ! रत्नावलि ! निश्चयं ते कौमारहरश्चोरो वरो यदि यास्यति स सुकृतैकभाजनं त्वयाऽतियत्नेन कोमलबाहुलतापाशेन पाशयितव्यो यथास्माभिर्गोचरीक्रियेत । अपि च रत्नेशादेशात्प्रगे(५) एव तव तेन लब्धश्वश्रेयसेन प्रेयसा मनोहारिणा मनोरथकारिणा च भवितव्यम् । अहो ! अस्मासु यातास्वपि भवत्येव सुकृतातिरेकेण रत्नेश्वरं लिङ्गं वरवितरणमुखरं लोचनगोचरीचकार । चित्रं दिष्टोदयस्य(६) वृषोद्रेकस्य(७) च यत एकस्या एव सिद्धिरेकत्रवासास्वपि । दिष्टमेवेष्टं साधयति नोद्यमः । एकोद्यमा हि वयं भवती च । नियति-

(१) सेन्द्रियनिग्रहम् । (२) वचनम् ।
(३) स्तुत्यानि । (४) त्रिनेत्रम् । (५) प्रातः ।
(६) भाग्योदयस्य । (७) सुकृतातिशयस्य ।

शृङ्गवादिन(१) एव तथ्या कथा' इत्यभिधाय पुनरप्यवदन्—'सखि ! किंवदन्ती(२)यं प्रसङ्गेनास्माभिरवाचि नेर्ष्यया । यत इष्टोपगतिस्तु तव या सैव न' इति ।

एवं जल्पन्तीभिस्ताभिः सुदूरमपि वर्त्म कलयांत्यल्पवदत्यक्रामि । प्राप्य च निवासं हर्षनिर्भरतया निर्वर्त्य वासरचर्यां परस्परवियोगशुचीव सान्ध्ये तमसि प्रसृते वयस्याः परस्परमामन्त्र्य स्वं स्वमालयं प्रययुः । रत्नावली तु सखीवियोगदूनापि रत्नेशादिष्टप्रियतमसङ्गमाशासमुदितया मुदा सम्पन्नशृङ्गारवेषाभूषा संवेशवेश्मनि संविवेश । उत्तरेद्युः रत्नेशदर्शनोत्कलिकया सहोदिते दिनपतौ परस्परं मिलिताभिरालीभिर्मौनवतीयं रत्नावली विस्रस्तकेशपाशा मृदिताङ्गयष्टिरलसितनयना च्युतमाल्यानुलेपना श्लथवसना परिभुक्तेवालक्षि । अथ पतच्चन्द्रचतुष्टयमिव गगनात्तूर्णं वाराणसीमवतीर्य विमलमन्दाकिनीजले सलीलमाप्लुत्य रत्नेशं ददृशुः । समर्च्य च दिव्योपचारैः प्रदक्षिणान्तमाचर्य विसृज्य च नियमं (३) तस्य रत्नेशमन्दिरस्यानतिदूरे विमलमन्दाकिनीसलिलसीकरसंसिक्तकुमुदकल्हारगन्धिसमीरान्दोलितविविधतरुलताविराजिते रत्नेशारामैकदेशे विमलशिलातले वल्लीमण्डपिकाच्छन्ने उपह्वरे(४) समुपविविशुः । तदनु ताभिरालीभिरनुयुक्ता मन्दाक्षमुकुलिताक्षी निजोदन्तं क्षणदाभवमाचचक्षे—

'सख्यः ! प्रयातासु निजनिकेतनं भवतीषु तद्गलेशवचनपीयूषरसास्वादमनुभवन्ती प्रतिपन्नशृङ्गाराभरणा तदवलोकनकुतूहला शयनहीन(५)-नयना शयनीयमभजम् । परिजनोऽपि यथायथं सुष्वाप । तदनु भाविविषयस्यावश्यभाव्यतया सहसा स्वप्नदशामगमम् । बोधविरोधिभ्यां प्रमीला(६)तदङ्गसङ्गसुखाभ्यामात्मविस्मृतिमगाम् । एवं परवशीभूतया मया तदीयसङ्गानङ्गरससरस्वन्निमग्नया नाज्ञायि 'किमभवत् कोऽयं काहं क्वाह'-

---

(१) दैवप्राधान्यवादिनः । (२) लौकिकी कथा ।
(३) मौनरूपम् । (४) रहसि ।
(५) निद्रारहितनेत्रा । (६) तन्द्रा ।

मिति। अथ तं यातुमुद्यतं यावद् बाहुलतापाशेन बध्नामि तावदन्तराय-कराणि करकङ्कणान्यत्युल्बण(१)मक्वणन्। तेन सिञ्जितेन(२) महता प्रबोधितवती प्रज्वलत्सु दीपेषु सुप्तेषु परिजनेषु आत्मानं तल्पिन(३)गतामेकाकिनीमन्वभवम्। ततस्तद्विरहदहनकीला(४)वलीढया हृदि स्थितं दयितं चिन्तयन्त्या मूकतामापन्नया विस्मृतसकलकलया व्याकुलया मया शेषयामिनी युगशतमिवात्यवाहि। न जाने, स किंदेश्यः किंवंश्यः किंनामा। अहो! विधात्रा कन्दर्पसौन्दर्यदर्पमपहर्तुमिवापरः कन्दर्पसौन्दर्यातिशयसौन्दर्य उदपादि। अथ वा रत्नेश्वरेणैव रूपातिशयसम्पादनोपकरणहीनतां विधातुरवलोक्य स्वयमयमसञ्जातपूर्व उत्पादितः। दुनोति मे हृदयं तद्विलोकनलालसायाः। तद्विश्लेषानलेन तप्ताहं 'किं करोमि क्व गच्छामि किं शरणं केन वा कौशलेन कया प्रज्ञया कतमेनाश्वसनेनात्मानं धारयामी'त्यनल्पोत्कलिकाकुलितं चेतो न धारयितुं शक्नोमि। जिगमिषूणामसूनां स्थितये संवेश(५)गतस्य तस्य पुनरालोकनेतरं न पश्यामि किञ्चिदगदम्(६)। सहचर्यः! किं ब्रवीमि, प्रेमनिभृते सहचरीजने का मृषा भाषेत। अकार्यकारी पञ्चशरो दशया दशम्या(७) कीर्तिशेषां मामापादयितुं यतते। पुनस्तद्दर्शनेनैव मां जीवितामीक्षितास्थ। हे सख्यः! तत्र तदीयं भूय ईक्षणं भवतीनामायत्तमस्तीति निश्चिनोमि'।

एतत्तदीयं विरहविक्लवं(८) वचनमाकर्ण्यालयो नारिकेलजलमिवान्तः क्षुब्धमन्तःकरणं वहन्त्यः परस्परमालोकयन्त्यः समब्रुवन्—'वसुभूतिसुते! यस्य नावगम्यते किमभिधानं का जातिः किं कुलं को देशः कस्य सूनुः किमाकृतिः, स कथं प्रापणीयः क उपायो विधेयः का बुद्धिः सञ्चारणीया किमपूर्वं साधनीय'मिति। रत्नावली तु तासामीदृक् ससंशयं शंसितं निशम्य लघुहृदया 'हे सख्यस्तदुपलब्धौ यूयं कुण्ठितशक्तय'इति व्याहरन्ती 'यूयं कुण्ठी'त्यर्धोक्तेनैव मुमूर्छ। अथ सख्यस्त्वरमाणास्तां मोहमीलिताक्षीं

---

(१) अधिकतरम्। (२) कङ्कणरवेण। (३) शय्या।
(४) ज्वाला। (५) स्वप्नगतस्य। (६) औषधम्।
(७) मरणरूपायाम्। (८) कातरम्।

पक्ष्मलाक्षीमवनिलुठितां श्लथाङ्गलतां निर्वर्ण्य व्याकुलेन हृदयेन किमिति किमिति व्याहरन्त्यस्तदङ्गयष्टिं धारयन्त्यस्तन्मोहोपशान्तये कोमलानि कदलीदलशकलानि आस्तीर्य स्वापयामासुः । एका कमलकिञ्जल्कसुरभिमन्दाकिनीशीतलजलं मलयचन्दनद्रवं कर्पूरचूर्णमिश्रं च सिषेच । अन्या सलिलक्लिन्नेन नलिनीदलेन मन्दं मन्दं वीजयाञ्चक्रे । अपरा तदङ्गलग्नानि कदलीनलिनीदलानि सन्तापशुष्काणि प्राक्षिपत्, नूतनान्यन्यान्यधारयत् । रविकरप्रभाप्रवेशनिवारणाय लतामण्डपिकाच्छिद्राणि पल्लवै रुरुधुः । कोमलकुवलयदलैरङ्गानि ममृजुः । मण्डपिकोपरि सलिलसेकेन वर्षासारमिव सर्वत आर्द्रीचक्रुः । एवमनेकविधाभिः क्रियाभिरुपचेरुस्तथापि न सा मोहमत्यजत् । तदैका तु प्रत्युत्पन्नमतिः(१) सत्वरमुत्थाय रत्नेशस्य स्नपनोदकमानीय तस्याः सकलावयवेष्वसिञ्चत् । 'श्रद्धधानस्य भक्तिभावनस्य हि विपद्यपि महति नोपायान्तरमन्तरेणेशचरणामृतमस्ती'ति तज्जलस्पर्शमात्रेण सा विगतमोहा सुप्तोत्थितेव पुनरुत्पन्नेव 'शिवशिवे'ति भाषमाणोदतिष्ठत् । उत्थाय चाङ्गजृम्भिकामाचरन्ती धैर्यं सन्धार्य रत्नेशप्रसादलब्धया बुद्ध्या कार्यमवधार्योवोचत्—'सख्यो ! यूयं मदीहितलम्भने (२) कुतः कुण्ठिता अभूत । सरस्वतीप्रसादलब्धाः सकला वः कलाः स्मृतिपथादपजग्मुः किमु ? हे आलयो ! रत्नेशप्रसादेनैवोपाय एको मय्यस्फुरत् । शृणुत तं कुरुत च । आविर्भवद्रम्यतारुण्यच्छवीन् तिरोभवत्कौमारकान्तीन् सुषमपुंस्त्वश्रीकाननुपमेयसौन्दर्यान्युवसमूहान् यूयं संलिखत । हे शशिलेखे ! त्वं लेखान् विलिख । हे अनङ्गलेखे ! त्वं धरणिवलयगानालिख । हे चित्रलेखे ! त्वमधोभुवनगान् संलिखे'ति ।

एतदाकर्ण्य तदीयचातुर्याश्चर्यफुल्लहृदयः सख्यो लपितमभिनन्द्य(३) विशदमसृणचीरपटे तरुरसरागेण क्रमश एकशस्त्रिभुवनगान् लावण्ययौवननिधीन् लिलिखुस्तरुणस्तोमान् । मदनशरजर्जरिता वसुभूतिसुता सुरसद्मगतानमरानितरांश्च निरूप्य चपलाभ्यां लोचनाभ्यां रतिमलभमाना

---

(१) तात्कालिकबुद्धिः । (२) प्रापणे । (३) भाषितं संमान्य ।

ऽत्यजत् । अवदच्च 'श्रेयोऽतिशयसम्पाद्यमानलावण्यसम्पन्नेऽपि सुरलोके बत न कोऽपि तादृग्रूपलावण्यसम्पन्नः सम्पन्न' इति । ततोऽवनितलभवान्मुनिकुमारान्युवराजानन्यांश्च निभाल्य 'न तथा सौन्दर्यममर्त्येष्वपि का वार्ता मर्त्यानां'मिति वदन्ती मुदं न लेभे । तदनु बलिसद्मगतेषु नयने सम्प्रेर्य दितितनयान् दनुसुतांश्चिरूप्य मनसिजदहनदूना नागयुवस्वक्षिणी प्राक्षिपत् । तेषु प्रत्येकमशेषान् शेषवंश्यान् वासुकिसन्ततिजानन्तजनजान् पुलीककुलजान् कर्कोटकगोत्रजान्भद्राभिजनजान् चित्रगतानपि पश्यन्ती क्षणमीषल्लज्जिता नागराजं शङ्खचूडमपश्यत् । तदीक्षणादेव त्रपाभरविनम्रवदना पुलकिताङ्गयष्टिरभूत् । तदीयव्रीडाभरेण पुलकोद्गमेन चातिपेशलया चित्रलेखया कौमारहरो वरः क्षणादलक्षीव । तदनु परिहासरसिका चित्रलेखा कुतुकेन निजपटाञ्चलेन चपलं चित्रपटीमगूहत् । मन्दाक्षमुद्रितवचना स्फुरद्बिम्बाधरा रत्नावली वक्रया दृशा तामैक्षत । तदा चतुरया शशिलेखयाऽपाङ्गेनेङ्गितानङ्गलेखा चित्रलेखाप्रहितं पटाञ्चलं सत्वरमदूरयत् । अथोत्कलिकाकुला रत्नावली शङ्खचूडान्वये रत्नचूडमद्राक्षीत् । तदवलोकनादेवानन्दाश्रुसलिलप्लुतं लोचनयुगलमभवत् । कपोलपालिर्मुक्ताफलविच्छुरितेव स्वेदबिन्दूाञ्चिता बभूव । चकम्पे च रोमाञ्चकञ्चुकिता तन्वी तनुलता । चित्रन्यस्तदयितमिव स्वयमपि तस्तम्भ । ह्रिया च वदनमनमत् । मदनतापेन वैवर्ण्यमप्यतिशयितमभूत् । एवं सात्त्विकभावभावितां प्रियसहचरीं वसुभूतिकुमारीमातुरां समीक्ष्य समाश्वासयच्चित्रलेखा—'अयि सखि ! समाश्वसिहि त्यजोत्कलिकां मा विषीद सिद्धं तवेहितं फलितस्ते मनोरथः सुलभस्ते दयितः अवगतमस्य विषयवंशनामादिकम् । सेवनसन्तुष्टेन रत्नेशेन सदृशदयितदानेन सन्तोषितासि । उत्तिष्ठ व्रज, प्रयामो निजनिकेतनम्' ।

एवमेकदा लिङ्गरूपी रत्नेश्वरो निशि नागराजकुमारस्य रत्नचूडस्य निजभक्तस्य स्वप्नदशायामाविर्भूयावदत्—'नागराज ! युवराज ! भवान् सुकुमारीं यां कुमारीं विियत्पथस्य पातालमापतन्तं स्सरन्तं(१)

(१) कपटेन भवन्तम् ।

क्रूरभुजं दनुजमाहवे निहत्य मोचयिष्यति, सा ते लावण्येनानुपमा प्रियतमा भविष्यती'ति । श्रुत्वैतदतिहर्षवर्षकरचनं वचनं प्रबुध्य विस्मयविकसितनयनः 'आश्चर्यमकृतातिपरिचर्ये मयि क्षिप्रतोषो रत्नेशो वरदीभूयाऽनुपमां प्रियतमां निर्दिदेश । कदा च सा प्रसादलभ्या हरिणकिशोराक्षी मे प्रत्यक्षीभविता । सा हि किन्देशीया किंवंशीया किंरूपा किमभिधे'-त्यनल्पकल्पनाकवलितहृदय उर्वरितशर्वरीं जागरित एवानयत् । उपस्युत्थाय समुपजातफलोदयः समौत्सुक्यचञ्चलो मनसिकृतमञ्जुलो रत्नेशवरं स्मरन् 'रत्नाअत्यष्टकेन कनककमलाष्टकेन च प्रत्यहं द्रष्टापि अर्चयिष्यामी'ति तदैव नियमं समकल्पयत् । ततश्चानुदिवसं परमेशस्य रत्नेशस्य कल्पशस्यां (१) नमस्यामाचरन् मनोरथसहस्रपर्याकुलः संवेशोदितदयितालब्धिं प्रतीक्षमाण एवासीत् । अथात्र चित्रपटीप्रदर्शनेन प्रियतमलाभं सुलभंमन्या गन्धर्वकन्या गमनाध्वना गेहमगमन् । दयितविरहवेदनादूयमाना रत्नावली तामेव चित्रपटीं निभालयन्ती विस्मृतामपि सकलदिनचर्यां पर्याकुलतया वयस्यार्थनाभिः कथमप्याचरन्ती दिनमनैषीत् । तदनु गतासु निजनिलयमालीषु पुनरुक्तोत्कलिकाविकलहृदया परिवर्त(२)-विवर्तनेन सुदूरदीर्घामिव रजनीमनीनयत् । उषसि सज्जत्य वयस्याभिर्मीनवती त्वरितमानन्दवनमेत्य विमलमन्दाकिनीसलिलमवप्लुत्य जगदीशं रत्नेशं समभ्यर्च्य ताः तदीयाभिरेव कथाभिरुत्कण्ठाविनोदं कुर्वतीर्मन्दं मन्दं गगनायनेन निलयं व्रजन्तीरतर्कितोपनतेन बलिसद्मवासिना दनुसूनुना सुबाहुना दैववशाच्चलतोऽपि अर्गलपीवराभ्यां तालतरुदण्डकर्कशाभ्यां भुजाभ्यां करालाननेन पञ्चाननेन प्रान्तरे कान्तारे कुरङ्गीरिव प्रगृह्य स्वोदवसितमव्राजि । तदीयभुजदण्डनिगडितास्तास्तं क्रूरदंष्ट्रमुग्रपूतिवक्त्रं शोणितशोणनेत्रं लम्बघोणं महाप्राणं (३) विस्तृताधरं जुगुप्साकरं दीर्घकर्णं कालवर्णं कठोरधूम्रकेशं पर्वतनीकाशं कीनाशदूतमिवारिषं परिवसनाथकरं भयङ्करं निरीक्ष्य साध्वसध्वस्तास्त्रस्ताङ्गयष्टयो वेपथुभूमयो व्यलपन्-'हा तात ! हा

---

( १ ) विधियुक्ताम् । ( २ ) अङ्गलोठनम् । ( ३ ) बलवन्तम् ।

जननि ! त्रायस्व । हा नियते ! किमस्मास्वारब्धमनाथासु । हा ! मन्दभाग्याभिरस्माभिः किमाचरितम् । हा ! कश्चित्सुकृतेतरवार्तापि न व्याहृता । हा ! विहाय रत्नेशार्चनं पित्रोरादिष्टकृत्यं शिशुखेलनं च न किञ्चिदपि जानीमः । हा ! रसातलं नीतानां नाथेन हीनानां भयेन दीनानां कस्त्राता नो भविता । हे रत्नेश ! हे दयालो ! हे वरद ! हे आशुतोष ! पाहि शरणागता बालाः ।

इत्थं विलपन्तीनां गन्धर्वकुमारीणामार्तरवमशृणोन्निजसद्मगतो भुजगराजजो रत्नचूडः । अवदच्च 'केन कर्मपाशनाशनस्य मदीशस्य रत्नेशस्य नाम निगीर्यते । अथ वा रत्नेशोदितदनुतनुजाहृतकन्यकार्तरव एवैष' इति । पुनरपि कन्यकाननेरितं 'रत्नेश ! पाहि पाही'ति कातरं स्वरं निशम्यार्तत्राणतत्परो जन्यजित्वरः सत्वरमुत्थाय शरशरासने समादाय निजागारतो निरगादसह्यपरपीडो रत्नचूडः । दृष्ट्वा च तं दुरदृष्टं मांसपुष्टं वपा(१)पानतुष्टं दुष्टचेष्टं मानवादं दानवाधमं सुबाहुं दुन्दुभिनिर्घोषेण रोषेण भर्त्सयन् बभाषे—'रे दानवापसद ! दुष्ट ! शिष्टकन्यापहारक ! मल्लोचनगोचरीभूय क्व यास्यसि । व्यथितरक्षणदक्षिणस्य मम निशिताशुगहतासुरधुनैव शमनसदने गमनं कुरु' इति । स च सुभगसुकुमारं फणिकुमारं विलोक्य स्फुरितायतदशनवसनः(२) प्रावदत्—'रे बाल ! किमजानन्निजाधिकृतिं मादृक्षेण बलक्षपितवीरलक्षेण हर्यक्षेणेव सह कुरङ्गः सङ्गाममभिलषसि । याहि निजाऽऽलयं, मा पातय जनकजम्पती शोकसागर'मिति । श्रुत्वैतद्रत्नचूडः पुनरवोचत्—'रे दैतेय ! जाल्म ! किमिति शारदमुदिररसितेनेव मुधाजल्पितेन । दर्शयाशु बलक्षपितवीरलक्षं निजबलम् । नाहमण्वपि बिभेमि । त्वां तृणाय मन्ये । किञ्च रत्नेशनाम गृणत्सु भयार्दितेषु त्वादृग्भ्यो दुरात्मभ्यो न कल्पान्तविपद्यपि भयमस्ती'ति ।

तदनु निजमुखनिहितनयनं दरभरकम्पिततनु कन्यकाजनं 'मा भैषिष्टे'त्याश्वास्य स्वनिषङ्ग(३)निष्काशितं निशितविशिखं कर्णान्ताकृष्टकार्मुकः प्राक्षिपत् । ततः स दितिजाणक (४)एनं माणवकं मन्यमानः कन्यका-

(१) वसा । (२) दीर्घोष्ठः । (३) तूणीरः । (४) निन्द्यः ।

जनमारोप्याविचरणि धरणीरुह(१)मुत्पाट्य प्रेरयाञ्चकार। रत्नचूडोऽपि समरपेशलश्चपलं तं चतुर्भिरिषुभिश्चतुष्खण्डमखण्डयत्। स पीनबाहुः सुबाहुरपि रूपवानिव कोपः पादताडितगूढपाद (२) इव क्षुब्धो दंष्ट्राविकटलम्बोष्ठो भुजगराजकुमारजिघांसया कालदण्डनिभमुत्पादितबहुरूपं परिघं(३) प्राहिणोत्। रत्नेशस्य तदीयहृदयवर्तितया तत्परिघं तस्य गात्रान्तिकमालात(४)दण्डवदेवागच्छत्। कृतरिपुपीडो रत्नचूडोऽपि सजवेन हस्तलाघवेन तदन्तरैव शरैस्तदायुधा शेषेण सह विचिच्छेद। यावत्स दुर्वृत्तोऽन्यत् प्रतिकरोति तावत्ससम्भ्रमं समरचतुरो रत्नचूडः कालकल्पेन कल्पान्तकारिणा महेषुणा हृदि तमभ्यधीत्। स विसृष्टो वत्सविष्टो (५) बाणः प्राणांस्तस्य दुष्टस्यान्विष्य विचित्य निर्गत्य च देहाद् दूरमयाद्वदितुमिव दिगङ्गनापुरतस्तदीयं दौरात्म्यम्। तद्देहो वात्याहतमहामहीरुह इव महीतले न्यपतत्। यो ह्यनयसम्पादितेन वस्तुजातेन समीहते सुखभोगाय, तस्य निकृतस्य(६) सहासुभिर्वस्तुजातं यथागतं व्रजत्येव। सुखं तु दूरतोऽपास्तम्।

अथापनीतकन्यकापीडो रत्नचूडस्तं दानवमेवं निपात्य ताः प्रत्यब्रवीत्—'अयि सुन्दर्यः! कुमार्यः! सुदतीभिर्भवतीभिर्जन्मना किममलं कुलं समलङ्कृतम्। का यूयं, कुतो वाऽयं दुराचारो दानवो युष्मानकस्मादपाहरत्। क्व वा सर्वेश्वरं प्रभापिङ्गं रत्नेश्वरमहालिङ्गं नयनाऽयनानीत(७)मभवत्। यन्नामवर्णोद्गिरणेन यूयं निरस्तसमस्तविकटसङ्कटा अभूत। एतदुत्तरवितरणेनानुगृह्यतामयं जनः'। इत्याकर्ण्य तदीयां प्रणयनिपुणां वाणीं सपरस्परविलोकनं शनैरजल्पन्—'कोऽयं प्रागीक्षितवत् सङ्कटे समुपागतोऽकार्यसुहृत्। अमुना बलिना दयालुना निजजीवितमर्जुनीकृत्य(८) दनुजनिपातनेन वयमाजीविताः। अस्यावलोकनेन प्रकृतिचपलोऽपि विषयिचयो(९)ऽचलतामेति। पश्य, रम्यान्तरमपि निरूप्यास्माकमोऽन्यत्र नयने

(१) वृक्षम्। (२) सर्पः। (३) आयुधविशेषम्।
(४) उल्मुकम्। (५) वक्षःस्थलप्रविष्टः। (६) शठस्य।
(७) नेत्रगोचरीकृतम्। (८) तृणीकृत्य। (९) इन्द्रियगणः।

चलतः। व्याहृतपानमत्ते श्रवणे अपि रमणीयश्रवणीयान्तरमप्युपेक्षेते। हृदयमणिमोषकस्यास्य निभालनेन खञ्जतामापद्येते व्रजितुं चरणे'। इति अन्योन्यमुपांशु लपन्त्यो दृष्टपूर्वमपि चित्रपटे दारुणदानवदर्शनेन भयभर-विकलितनयनतया तं निजजीवितदातारमातुरा अपरिचिन्वत्यः प्रत्यब्रुवन्—'अङ्ग जैवातृक!(१)स्निग्धमुखेन यत्पृष्टा भवता तद्वदामः, श्रवणदानेनानुग्राह्योऽयं कुमारीजनः। हे प्राणप्रद! इयं गन्धर्वाधिपतेर्वसुभूतेरतिप्रिया तनया गुणरत्नालयो रत्नावलीनाम। वयं चैतस्या वयस्या बाल्यप्रजा इवाऽसवः सततसहसकलकृत्याः स्मः। आशैशवादेषा काशीमागत्य महेशस्य रत्नेशस्य मित्रीकृतैकपिङ्गं(२) ज्योतिर्लिङ्गं प्रत्यहमर्हयितुं तातानुज्ञाता समायाति। अहो! किमद्य घटितम्। आनम्य रत्नेशानं हर्षनिर्भरिताश्चलिता अपि दरभरनिर्भरिता अभूम। तत्रापि तत्र भवता भवता आजीविता'इति।

आकर्ण्यैतत् कुतुकलुलितनयनो नयनकर्णकुमारः(३) पुनरपृच्छत्—'अयि सीमन्तिन्यः! यदि रहस्यमवक्तव्यं न चेद्धर्षकारणं तदनुभवतु श्रवणसुखमयमनुग्राह्यो जनः'। श्रुत्वैतदन्योन्यक्षिप्तचक्षुषोऽब्रुवन्—'को दोषः कथने सरलहृदये, श्रूयताम्। आयुष्मन्! परश्वोऽस्यै नः प्रियाल्यै रत्नावल्यै सङ्गीतसन्तुष्टेन रत्नेशेन वरो व्यतारि—'यस्तव संवेशे शैशवमशेषयिष्यति स त्वन्नामपदाङ्कितनामा भर्ता ते भविते'ति। तेन भाविना निजपतिना स्वप्ने सङ्गत्य प्रबुध्य च तद्विश्लेषशोचिष्केशशोषिताशेषदशामाप्तवतीवाऽभवत्। सोऽप्यस्माभिर्दयितः कलापेशलतया चारुचित्रपटे प्रदर्शितः। अज्ञातनामकुलदेशमपि तं चित्रगतं विलोक्यैवैषाऽऽयुःशेषा पुनर्जिजीव। तदेव प्रतिच्छन्दक(४)मस्या जीवितधारणेऽधुनावधि सुधायितम्। तदनु चाद्य रत्नेशमानम्य निजालयं यातुं चलिताश्चतस्रोऽपि गगनायनेऽकस्मादागतेन दुर्दानवेन प्रसह्य प्रगृह्याधोभुवनगमनमकारि। इतः परं भवानेव तं दनुसुतापसदं जानातीत्येव निजं वृत्तम्। हेऽनुकम्पाकर! निजोदन्तनिवेदनेन भवानप्यस्माननुगृह्णातु। दानवदर्शनात्प्रभृति सौदा-

(१) आयुष्मन्। (२)मित्रीकृतकुबेरम्। (३) नागकुमारः। (४) चित्रपटः।

मिन्युपहतनेत्रप्रभा इव भयत्रस्ता अधैर्यध्वस्ताः क्षुब्धहृदया वेपथुमया(१) न विद्मः, क्व वयं का वयं को भवान् किं भविता किमभूदिति' ।

कर्णाभ्यर्णलोचनानां कुमारीणामाकर्ण्येदगुदन्तजातं स्वप्नशंसितप्रियतमालाभं प्रत्यभिज्ञाय तदीयरूपलावण्याकृष्टहृदयः सुखसुधाह्रद इव निमग्नस्तन्मुखासक्तदृष्टिः पञ्चशरशरव्यीभूय (२) रोमाञ्चितः स्तम्भितः कम्पितः श्वसितो विकलित उत्कलितोऽपि(३) नागराजात्मजो बहुश्रुततया विवेकितया सुकृतितया नयानुगततया गुरूपदिष्टतया च दुर्निवार्यकन्दर्पवेगं भीष्म इव सुरधुनिरोधं निरुध्याभ्यदधात्—'हे गन्धर्वकुमार्यः ! योऽहमस्मि सोऽहमस्मि । प्रथमं यदि रत्नेशं द्रष्टुकामा भवत्यस्तर्हि समागमत सह मया । दर्शयामि वो रत्नेशम्' इत्यभिधाय सप्रश्रयं समनयत् कल्लोलितकालिन्दीप्रवाहसममरकतसोपानां विविधरागमणिचयचमत्कृतरचनां शान्तिसुखागारं वर्तुलाकारां मध्यगतस्तम्भशालामनोहरां हस्तगतकनकधारायन्त्रेभ्यः सलिलासारं स्रावयन्तीभिर्ललितपुत्तलिकाभिर्विराजितगर्भभित्तिकां निर्मलसुरभिसलिलपूर्णां कलहंससारसकोककुररादिकवि(४)विरुतच्छद्मना सलिललीलायै हूति(५)मिव कुर्वतीं कमलकुवलयकह्लारनलिनलुब्धमधुपगुञ्जितेन समागतस्य स्वागतमिवाचरन्तीं मारुतोद्धूतपरागपङ्किलां लीलावापीम् । जगाद च 'अस्यां निमज्जत, प्रत्यक्षीभविष्यति ऽयक्षेशो रत्नेश' इति । ततस्तस्यां ताश्चतस्रोऽपि समास्यवसनभूषणा भुजगराजतनुजादेशेन तद्गतकमलमिलितलपना (६) न्यमज्जन् । जलादुन्मज्ज्यैव रत्नेशालयं ददृशुः । गतासु तासु रत्नचूडो धैर्यवानप्यधैर्यकलितस्तद्विश्लेषपरिक्लेशमनुभवन् योगीव तदनुचिन्तनपरश्चन्द्र इवार्जुनीभूतः(७) कृशीभूतश्च मत्त इव विस्मृतनिजकृत्यः शून्यदृष्टिश्च मूक इवाजल्पन् प्रतिमेव स्थगितमूर्तिरासीत् । विलोकितश्चैवं प्रियसुहृदाऽभिहितश्च—'वयस्य ! किमद्य ते सद्य उद्गतं वैलक्ष्यमनुलक्ष्यते प्रकृतिगतम् । यदि नाऽकथ्यं कथ्यतां तर्हि, हृदयमन्यथा

---

( १ ) कम्पप्रचुराः । ( २ ) लक्ष्यीभूय । ( ३ ) उत्कण्ठितोऽपि ।
( ४ ) जलपक्षिणः । ( ५ ) आह्वानम् । ( ६ ) मुखम् ।
( ७ ) श्वेतीभूतः ।

 

दुनोति मे'। श्रुत्वैतद्दीर्घमुष्णं च निश्वस्य फणिराजयुवराजः शनैरभाषत—'सखे ! किमपि भवति(१) नावाच्यं भवति, विदितावश्यलभ्योऽपि वश्यता-मुपयातोऽस्म्यनवसरविस्फारितशरासनस्य विषमशरस्ये'त्यभिधाय संवेशादि दयितावलोकनान्तमुदन्तजातं निजगाद । उपलभ्यै(२)तदाश्वासयत्सवयाः 'निश्चितसिद्धौ धैर्यमेवावष्टभ्य गूहनीया प्रकृतिविकृतिर्मतिमता विलम्बेऽपि । किमित्यनुभवसि वैकल्य'मिति । आकर्ण्यैतत्पुनरुवाच रत्नचूडः—'सखे ! किं ब्रवीमि, दर्शनसमयात् सानुपमा प्रियतमा मे मनसि बिम्बितेव लीनेव खचितेव स्यूतेव कीलितेव सर्वदा विराजते । किं करोमि, अननुभूतपूर्वो देहदाहः प्रमथ्नन्निव प्रसरति । तिरयति विषयग्राहकता च विषयिणाम् । अन्तरात्मा च निमज्जत्यन्धे तमसि । अशरणं मे हृदयं भ्रमति मारुतापनीत-पोत इव चिन्तोदन्वति । कर्तुं न शक्नोमि किमपि लोकचर्या'मिति । निशम्यैवं विहस्य पुनरूचे वयस्यः—'सखे ! रत्नचूड ! सतनुदानवनिपातनस्य तवाऽतनुमनसिजनिपातने न सन्ति किमु विवेकहेतयः(३) । अपि च रत्नेश-प्रसादात् सत्वरमेव मनोरथसिद्धिर्भविता । समाश्वसिहि ।

अथावलोक्य ता रत्नेशस्थलं स्थगिता इव विस्मिता इव चकिता इव परस्परमालपन्—'अयि ! स्वप्नोऽयं किमु तथ्यं वा । किं नु वयमेव भ्रान्ताः, किमु ता एव वयं न वा ? अथ वा रत्नेशस्य लीलेयम् । किमेतत् ? ऐन्द्रजालिकखेलवन्नावबुध्यते । एषा काश्येव प्रतिभाति । पश्य । एषोदग्वाहिनी सुरतटिनी । एतत् पञ्चनदतीर्थम् । एष कालभैरवः । एष वृद्धकालः कालोदमहिश्च । एष कृत्तिवासाः । एतत् हंसतीर्थम् । एषा मन्दाकिनी पुष्करिणी' इत्यादि बहुविधानि प्रत्यभिज्ञाचिन्हानि दर्शयन्त्यो यावद्रत्नेशं प्रणेमुः, तावद्दिव्यगीतप्रसूति-वसुमूर्तिर्यदृच्छयागतस्य दिदृक्षया भ्रमतो जगतो विषयेषु(४) निगमविशा-रदस्य मुनिनारदस्य मुखाद् 'रत्नेशदर्शनाद्विनिवृत्ता वियदयनगता दनुजनु-हृता बलिसद्मनीता वित्रस्ता विलोकिता नागराजयुवराजेन तेनैव निहता

(१) भवाब्धिपक्षे । (२) श्रुत्वा । (३) शस्त्राणि । (४) जनपदेषु ।

हनुमुखादुन्मोचिताऽऽश्वासिता पातालाधिकाशि वर्तिन्या शङ्खचूडवाप्या रत्नेशालयं प्रापिता सवयस्या ते प्रिया तनये'ति वृत्तान्तं नितान्तं दुःखकरं वैयग्र्य(१)करमुपलभ्य समभ्यगमस्त्वरया वाराणसीम्। आगत्य च निरूप्य सवयस्यां कृतरत्नेशनमस्यां प्रसन्नास्यपङ्कजां निजात्मजां पुनर्जीवितामिव वसुभूतिः कृताङ्कपालिका(२)मङ्कमारोप्य मूर्ध्न्युपघ्राय सादरमपृच्छत् सकलं प्रवृत्तिजातम्। अथ साऽन्तरेण (३) स्वप्नविषयं दनुजापहरणवार्तां सम्पूर्णामवर्णयत्। तदनु रत्नावलीङ्गितज्ञया विज्ञया शशिलेखया संवेशविषयोऽप्यशेषः समभाणि। देवगायकस्तन्नायकश्च वसुभूतिः सुकृती निशम्य नितरामन्तस्तुतोष। अस्तौषीच्च महिमानमतिमानं रत्नेशस्य।

अथ तरुतलनिहितच्छायैः खरकरसमुदायैर्ग्रस्तभुवनमण्डले गगनमणिमण्डले पुष्कर(४)मध्यवर्तिनि मध्याह्नस्नाननिमित्तोत्थितयमिजने काले रत्नचूडोऽपि तेनैव दीर्घिकामार्गेण नागलोकादविमुक्तमागत्य सानन्दं मन्दाकिनीसरसि स्नात्वा मध्यन्दिनकृत्यं निर्वर्त्य सुन्दरं रत्नेशमन्दिरं प्रविश्य विविधसम्भारेण रत्नाङ्गस्याष्टकेन कनककमलाष्टकेन च देवदेवं रत्नेश्वरं समपूजयत्। तदनु प्रणिपत्य प्रदक्षिणं परिक्रम्य रम्यान्माणिमण्डितमण्डपाद्यावद्बहिरव्रजत्, तावत् 'सोऽयं सोऽयं युवे'ति कुतूहलेनाङ्गुल्यग्रेण सध्रीचीभिः(५) प्रादर्शि। गन्धर्वराजो नागराजकुमारं निर्वर्ण्य तदीयवयोरूपगुणलावण्यविस्मितहृदयो हृष्टतनूरुहो मनस्यवादीत्-'अहो! धन्योऽस्मि रत्नेशानुगृहीतोऽस्मि, वरदप्रसादेन सदृशवरलाभेन कन्यापीयं धन्ये'ति। तदनु सुन्दरं नागराजकुमारं सादरमाहूय पृष्ट्वा च नामगोत्रं गणयित्वा च बलाबलं (६) तदानीमेव सर्वेश्वरस्य रत्नेश्वरस्य पुरतस्तस्मा अदाद् दुहितृरत्नम्। रत्नचूडोऽपि रत्नेशसाक्षिकं वाचाऽर्पितमभिलषितं सततचिन्तितमयत्नसुलभं भार्यारत्नं स्वीकृत्य रत्नेश्वरं श्वशुरं च प्रणम्य तेनैव वापीवर्त्मना पातालं प्राविशत्। गत्वा च निजभवनं जनकाय शङ्खचूडाय समस्तवृत्तान्तजातं सखिमुखादज्ञापयत्। सोऽप्याकर्ण्य परां

(१) व्यग्रता। (२) आलिङ्गनम्। (३) विना।
(४) आकाशः। (५) सखीभिः। (६) बलितम्।

मुदमवाप। अथ गन्धर्वाधिपतिर्वसुभूतिः सोपस्कारं (१) कृतसम्भारं सब्रह्म-वर्चसं(२)पुरोधसं मणिगणालोकं नागलोकं प्राहिणोत् । तत्सहितः पुरोहितस्तत्र गत्वा सवर्णीयांसं ससम्बन्धिनं ससुहृज्जनं जामातारं नागराज-कुमारं रत्नचूडं महतोपयमनयात्रिकोपकरणेन(३) गन्धर्वलोकं समानयत् ।

अथ गन्धर्वनेता वसुभूतिः सुलग्नेऽनेहसि कृतकौतुकमङ्गलेन वनिता-गीतमनोहरेण मुनिगणकृतस्वस्तिवाचनेन बन्दिरचितजयादिशब्देन प्रोद्य-त्तूर्यघोषेण दिव्येन वैवाहिकेन विधिना विविधमाल्यपल्लवकलशवादित्रादि-भूषिते रमणीयमण्डपे वरं मधुपर्केणाऽर्हयित्वा तनयापाणिमग्राहयत् । अदाच्च बहुविधानि बहुमूल्यानि यत्नलभ्यानि रत्नजातानि कनकाभर-णानि वसनानि वाहनानि चान्यान्युपायनानि जामात्रे तद्गुरुभ्यश्च सम्ब-न्धिभ्यश्च सुहृद्भ्यश्च । तदनु तास्तिस्रोऽपि वयस्यास्तस्याः स्वस्वपितरं नितरां संप्रार्थ्य तमेव भुजगराजाङ्गजं वव्रुः। वसुभूतिसंमतास्तेऽपि गन्धर्वा-स्तज्जनकाः कनकादिभिरुपायनैः सह निजनिजतनया यथाविधि प्रददुः । रत्नचूडोऽपि भुवनातीतसुन्दरीः कुमारीश्चतस्र उपयम्य चतसृभिः श्रुतिभि-रिव प्रणवः परमानन्दमन्वभवत् । ततश्चिराभिलषितं त्रपासुभगं प्रत्या-ख्यातनीवीविस्रंसनं स्वस्तिकीकृतहस्तस्थगितस्तनकुड्मलम् आलिङ्गन-जनितसुखातिरेकं विस्मृतसकलविषयान्तरं प्रथमसुरतसुखमनुभूयैकरात्र-मिव गणरात्र(४)मुषित्वा परितुष्टेभ्यः श्वशुरेभ्यो विसर्जितो निजालय-माजगाम । आगत्य च चतसृभिर्भार्याभिः सह पित्रोश्चरणावभिवन्द्य परम-सन्तुष्टेन पित्रा दत्तमधिराज्यसिंहासनं सामन्त(५)सहस्रसेवितमारुरोह ।

अथ पित्रोश्चरणावनुचरन् ताभिर्नवोढाभिः सह कदाचित्काशीमागत्य कतिचित्कालवासेन विश्वेश्वररत्नेश्वरादिसपर्याचर्यामाचरन् कदाचिद् गन्धर्वलोके विविधगीतवाद्यनाट्यकाव्यकलाविलासं कुर्वन् कदाचिन्नागलोके प्राज्ये निजाधिराज्यं पश्यन् कदाचिदप्रतिहतगतितया जगत्त्रयगतदिव्य-दिव्यस्थलेषु सुनिर्भरं विहरंश्चिरतरं परमसुखस्य परां कोटिमनुबभूवेति ।

---

(१) ससन्धानम् । (२) सतेजसम् । (३) विवाहयानसामग्र्या । (४) भिन्ना बहवः । (५) समन्ता भवा राजानः ।

वन्दे तं विश्वनाथं, गगनसुरसरित्तीरदेशेऽविमुक्ते
ऽमुष्मै(१) प्रोद्दिश्य दातुं तुहिनशिखरिणानीय रत्नौघराशौ।
क्षिप्ते, तत्पुण्यभारात्परिणतफलिनो लिङ्गरूपेण तुष्टः
प्रादुर्भूतः स्वधामोज्ज्वलितसकलदिग् यो हि रत्नेशनाम्ना ॥१६॥
पायाद् रत्नेशलिङ्गं, यदतुलमहिमा वर्ण्यते नापि वेदैः
सर्वो ब्रह्मादिदेवैर्मुनिभिरपि कथं नारदाद्यैः स वर्ण्यः।
प्रोक्तः किञ्चित्तथाप्युज्ज्वलरसकथया शम्भुनैव प्रियायै
बद्धोऽनूद्य प्रयत्नात्सरस इति मया गद्यबन्धेन धाष्ट्यात् ॥१७॥
स हि रत्नेश्वरमहिमा, कीर्तनतस्तत्प्रसादेन।
विद्याधनसुतकान्ताप्रज्ञारत्नानि लभ्यन्ते ॥ १८ ॥
इयं रत्नावली सम्यक्सुवर्णकुसुमाञ्जलिः।
धर्माधिकारिकृष्णेन रत्नेशचरणेऽर्पिता ॥ १९ ॥
भासन्ते पक्वचूतामलगलितरसोद्गारधाराः किमेते
किं मा(२)ऽऽत्तोपेन्द्रनाभीजलजननगलद्द्राक्षमाध्वीकधाराः।
किं वा दुग्धाम्बुनिध्युद्भवकनकघटाऽच्छोच्छलत्सौधधाराः
किं वा धर्माधिकार्यन्वयमुकुटमणेः कृष्णपन्तस्य वाचः।२०।

॥ इति श्रीधर्माधिकारिकृष्णपन्तपण्डितविरचिता
रत्नावलीसमाख्या कथा सम्पूर्णतामगात् ॥



(१) विश्वेश्वराय। (२) लक्ष्मीः।

## प्रशंसापत्रम् ।

इमां रत्नावलीकथां सम्मतीकृत्य साहित्यपेतकर्णधारो ढोण्ढाचार्य आर्याद्वयमलिखत्—

रत्नावली कथेयं सम्बद्धा रत्नचूडेन ।
रत्नेश्वरप्रसादात्सरसा रचिता हि कृष्णपन्तेन ॥ १ ॥
यो ह्येनां गुणसहितां सालङ्कारां विधूतदोषां च ।
निर्मत्सरं हि पश्यति सोऽप्येवं भवति तत्प्रसादेन ॥ २ ॥



॥ श्रीः ॥

# रत्नेश्वरमाहात्म्यम् ।

अगस्त्य उवाच ।

रत्नेश्वरसमुत्पत्तिं कथयस्व षडानन ! । रत्नभूतं महालिङ्गं यस्काशयां परिवर्ण्यते ॥
कोऽस्य लिङ्गस्य महिमा केनैतच्च प्रतिष्ठितम् । सर्वं विस्तरतो ब्रूहि गौरीहृदयनन्दन ! ॥

स्कन्द उवाच ।

रत्नेश्वरस्य माहात्म्यं कथयिष्यामि ते मुने ! । यथा च तस्य लिङ्गस्य प्रादुर्भावोऽभवद्भुवि ॥
यस्य लिङ्गस्य नामापि श्रुतं जन्मत्रयार्जितम् । वृजिनं नाशयेत्तस्य प्रादुर्भावं शृणु मुने ! ॥
शैलराजेन रत्नानि यानि पुञ्जीकृतान्यहो ! । उत्तरे कालराजस्य तानि तस्य गिरेर्मुने ॥
सर्वरत्नमयं लिङ्गं जातं तु सुकृतात्मनः । शक्रचापसमच्छायं सर्वरत्नद्युतिप्रभम् ॥
तल्लिङ्गदर्शनादेव ज्ञानरत्नमवाप्यते । गलेश्वरे समालोक्य शिवौ तत्र समागतौ ॥
यत्र रत्नमयं लिङ्गमाविर्भूतं स्वयं मुने ! । यस्य स्फुरत्प्रभाजालस्ततमम्बरमण्डलम् ॥
तच्च दृष्ट्वा शुभं लिङ्गं सर्वरत्नसमुद्भवम् । भवान्यदृष्टपूर्वं हि परिपप्रच्छ शङ्करम् ॥
देवदेव ! जगन्नाथ ! सर्वभक्ताभयप्रद ! । कुतस्त्यमेतल्लिङ्गं हि सप्तपातालमूलवत् ॥
ज्वालाजटिलिताकाशं प्रभाभासितदिङ्मुखम् । किमाख्यं किंस्वरूपं च किंप्रभावं भवान्तक ! ॥
यस्य संवीक्षणादेव मनो मेऽतीव हृष्टवत् । इहैव रमते नाथ ! कथयैतत् प्रसादतः ॥

देवदेव उवाच ।

शृणु पर्णे ! समाख्यामि यत्त्वयाऽपृच्छि पार्वति ! । स्वरूपमेतल्लिङ्गस्य सर्वतेजोनिधेः परम् ॥
तव पित्रा हिमवता गिरिराजेन भामिनि ! । त्वामुद्दिश्य महारत्नसम्भारोऽत्राप्यनायि हि ॥
अत्र तानि च रत्नानि राशीकृत्य हिमाद्रिणा । सुकृतोपार्जितान्येव ययौ स्वसद्मनं पुनः ॥
तवार्थं वा ममार्थं वा श्रद्धया यत्समर्प्यते । काश्यां तस्य परीपाको भवेद्दीर्घविपोऽनघे ! ॥
लिङ्गं रत्नेश्वराख्यं वै मत्स्वरूपं हि केवलम् । अस्य प्रभावो हि महान्वाराणस्यामुमे ! ध्रुवम् ॥
सर्वेषामिह लिङ्गानां रत्नभूतमिदं परम् । अतो रत्नेश्वरं नाम परं निर्वाणरत्नदम् ॥
अनेनैव सुवर्णेन पित्रा राशीकृतेन च । प्रासादमस्य लिङ्गस्य विधापय महेश्वरि ! ॥
लिङ्गप्रासादकरणात् खण्डस्फुटितसंस्कृतेः । लिङ्गस्थापनजं पुण्यं हेलयैवेह लभ्यते ॥
तथेति भगवत्योक्त्वा गणाः प्रासादनिर्मितौ । सोमनन्दिप्रभृतयोऽसंख्या व्यापारिता मुने ! ॥
गणैश्च काञ्चनमयो नानाकौतुकचित्रितः । निर्ममे याममात्रेण प्रासादो मेरुश्रृङ्गवत् ॥
देवी प्रहृष्टवदना दृष्ट्वा प्रासादनिर्मितिम् । गणेभ्यो व्यतरद् भूरिसम्मानं पारितोषिकम् ॥
पुनश्च देवी पप्रच्छ प्रणिपातपुरःसरम् । महिमानं महादेवं लिङ्गस्यास्य महामुने ! ॥

देवदेव उवाच ।

लिङ्गं स्वनादिसंसिद्धमेतद्देवि ! शुभप्रदम् । आविर्भूतमिदानीं च त्वत्पितुः पुण्यगौरवात् ॥
गुह्यानां परमं गुह्यं क्षेत्रेऽस्मिन्विचिन्तितप्रदम् । कलौ कलुषबुद्धीनां गोपनीयं प्रयत्नतः ॥
यथा रत्नं गृहे गुप्तं न कैश्चिज्ज्ञायते परैः । अविमुक्ते तथा लिङ्गं रत्नभूतं गृहे मम ॥
यानि ब्रह्माण्डमध्येऽत्र सन्ति लिङ्गानि पार्वति ! । तैरर्चितानि सर्वाणि रत्नेशो यैः समर्चितः ॥
प्रमादेनापि यैर्गौरि ! लिङ्गं रत्नेशमर्चितम् ! । ते भवन्त्येव नियतं सप्तद्वीपेश्वरा नृपाः ॥
त्रैलोक्ये यानि वस्तूनि रत्नभूतानि तानि तु । रत्नेश्वरं समभ्यर्च्य सकृत्प्राप्नोति मानवः ॥
पूजयिष्यन्ति ये लिङ्गं रत्नेशं कामवर्जिताः । ते सर्वे मत्समा भूत्वा प्रान्ते द्रक्ष्यन्ति मामिह ॥
रुद्राणां कोटिजाप्येन यत्फलं परिकीर्तितम् । तत्फलं लभ्यते देवि ! रत्नेशस्य समर्चनात् ॥
लिङ्गे चानादिसंसिद्धे यद् वृत्तं तद् ब्रवीमि ते । इतिहासं महाश्चर्यं सर्वपापनिकृन्तनम् ॥
पुरेह नर्तकी कावित्सा लोकाख्यार्थकोविदा । सैकदा फाल्गुने मासि शिवरात्र्यां कलावती ॥
ननर्त चामरं प्राप्य जगौ गीतं च पेशलम् । स्वयं च वादयामास नानावाद्यानि वाद्यवित् ॥

तेन तौर्यत्रिकेणापि प्रीणयित्वाथ सा नटी । रत्नेश्वरं महालिङ्गं देशमिष्टं जगाम ह ॥
कालधर्मवशं याता तत्र सा वरनर्तकी । सुता गन्धर्वराजस्य वसुभूतेर्बभूव ह ॥
सगीतस्य सवाद्यस्य तस्य लास्यस्य पुण्यतः । रत्नेशाग्रे कृतस्येह जागरे शिवरात्रिजे ॥
रम्या रत्नावली नाम रूपलावण्यशालिनी । कलाकलापकुशला मधुरालापवादिनी ॥
पितुरानन्दकृन्नित्यं वसुभूतेर्घटोद्भव ! । सर्वगान्धर्वकुशला गुणरत्नमहाखनिः ॥
मुने ! सखीत्रयं तस्याश्चारुचातुर्यभाजनम् । शशिलेखानङ्गलेखाचित्रलेखेति नामतः ॥
तिसृभिस्ताभिरेकत्र वाग्देवी परिशीलिता । ताभ्यः सर्वाः कलाः प्रादात्परिप्रीता सरस्वती॥
प्राप्य रत्नावली गौरि! सा जन्मान्तरवासनाम् । रत्नेश्वरस्य लिङ्गस्य जग्राह नियमं शुभम्॥
रत्नभूतस्य लिङ्गस्य काश्यां रत्नेश्वरस्य वै । नित्यं सन्दर्शनं प्राप्य वक्ष्याम्यपि वचो मुखात्॥
इत्थं नियमवत्यासीत्सा गन्धर्वसुतोत्तमा । ताभिः सखीभिः सहिता नित्यं लिङ्गं च पश्यति॥
एकदाराध्य रत्नेशं ममेतल्लिङ्गमुत्तमम् । समानर्च च सा बाला रम्यया गीतमालया ॥ ॥
सख्यः प्रदक्षिणीकर्तुं लिङ्गं तिस्रोऽप्युमे! गताः । तस्या गीतेन तुष्टोऽहं लिङ्गस्थो वरदोऽभवम्।
यस्त्वया रंस्यते रात्रावद्य गन्धर्वकन्यके ! । तत्र नामसमानाख्यः स ते भर्ता भविष्यति ॥
इति लिङ्गाम्बुधेर्जातां परिपीय वचःसुधाम् । बभूवानन्दसन्दोहमन्थरातीव ह्रीमयी ॥
गताथ व्योममार्गेण सखीभिः स्वपितुर्गृहम् । कथयन्ती निजोदन्तं तमालीनां पुरो मुदा ॥
ताभिर्दिष्ट्येति दिष्ट्येति सखीभिः परिनन्दिता । अद्य ते वाञ्छितं भावि रत्नेशस्य समर्चनात् ॥
यद्यायाति स ते रात्रावद्य कौमारहारकः । चोरो बाहुलतापाशैः पाशितव्योऽतियत्नतः ॥
गोचरीक्रियतेऽस्माभिर्यथा स सुकृतैकभूः । प्रातरेव तव प्रेयान् रत्नेशादिष्ट इष्टकृत् ॥
यातास्वस्मासु दृष्टासु भवती पुण्यगौरवात् । अहो ! रत्नेश्वरं लिङ्गं प्रत्यक्षीकृतवत्यसि ॥
अहो ! भाग्योदयो नृणामहो ! पुण्यमहोच्छ्रयः । एकस्यैव भवेत्सिद्धिर्येऽत्रापि तिष्ठताम्॥
सत्यं वदन्ति नासत्यं दैवप्राधान्यवादिनः । दैवमेव फलेदेकं नोद्यमो नापरं बलम् ॥
भवत्या अपि चास्माकमेक एव हि चोद्यमः । परं दैवं फलत्येकं यथा तत्र न नः पुनः ॥
लोकानां व्यवहारोऽयमालि ! प्रोक्तः प्रसङ्गतः । परं मनोरथप्राप्तिस्तव या सैव नः स्फुटम् ॥
इति संव्याहरन्तीनामनन्तोऽध्वातिशुच्छ्रयत् । क्षणात्तासां व्यतिक्रान्तः प्राप्ताश्च स्वं स्वमालयम्
अथ प्रातः समुत्थाय पुनरेकत्र सङ्गताः । सा च मौनवती ताभिः परिभुक्तेव लक्षिता ॥
तूष्णीं प्राप्याथ काशीं सा स्नात्वा मन्दाकिनीजले । सखीभिः सहिताऽपश्यल्लिङ्गं रत्नेश्वरं मम॥
निर्वर्त्य नियमं साथ लज्जामुकुलितेक्षणा । निर्बन्धेन वयस्याभिः परिपृष्टा जगाद ह ॥

रत्नावल्युवाच ।

अथ रत्नेशयात्रायाः प्रयातासु स्वमन्दिरम् । भवतीषु स्मरन्त्येव तद्रत्नेशवचोऽमृतम् ॥
सविशेषाङ्गसंस्काराऽविशं संवेशमन्दिरम् । निद्रादरिद्रनयना तद्विलोकनलालसा ॥
बलात्स्वप्नदशां प्राप्ता भाविनोऽर्थस्य गौरवात् । आत्मविस्मरणे हेतू ततो मे द्वौ बभूवतुः॥
तन्द्रीतदङ्गसंस्पर्शौ ममबोधापहारकौ । तन्द्रया परवशा चासं ततस्तत्स्पर्शनेन च ॥
न जाने स्वप्न किंवृत्तं क्वाहं क्वाहं स क्वाथ कः । तं निर्जिगमिषुं सख्यो! यावद्धर्तुं प्रसारितः ॥
दोःकङ्कणेन रिपुणा क्वणितं तावदुत्कटम् । महता शिञ्जितेनाहं तेनाल्पं परिबोधिता ॥
सुखसन्तानपीयूषह्रदे परिनिमज्ज्य व । क्षणेन तद्वियोगाग्निकीलासु पतिताऽबला ॥
किंकुलीयः स नो वेद्मि किंदेशीयः किमाख्यकः । दुनोति नितरां सख्यस्तद्विश्लेषानलो महान् ॥
अनल्पोत्कलिकं चेतः पुनस्तत्सङ्गमाशया । प्राणानां मे यियासूनामेकमेव महौषधम् ॥
वयस्या ! निशि भुक्तस्य तस्यैव पुनरीक्षणम् । भवतीनामधीनं च तत्पुनर्दर्शनं मम ॥
काऽलीकमालया ! वक्ति स्निग्धे मुग्धे सखीजने । तद्दर्शनेन स्थास्यन्ति प्राणा
यास्यन्ति मेऽन्यथा । दशमयवस्था सखीर्द्वि बाधितुं माधुना भृशम् ॥
इति तस्या गिरः श्रुत्वा दूनाया नितरां च ताः । प्रेमप्लावितहृदयाः प्रावुर्यस्य पारणाः ॥

सख्य ऊचुः ।

क्वास्थ ग्रामो न नो नाम नान्वयो वापि बुध्यते।स कथं प्राप्यते भद्रे! क उपायो विचीयताम्॥
इति रत्नावली श्रुत्वा ससन्देहां च तद्गिरम् । वयस्यास्तद्वचोऽसौ मे यूयं कुण्ठि मुमूर्छ ह ॥
इत्यर्थोक्तेन सा बाला यूयं कुण्ठितशक्तयः । यदुक्तवयं त्विति तया यूयं कुण्ठीति भाषितम् ॥
ततस्तास्त्वरिताः सख्यः परितापोपहारकान् । बहुशः शीतलोपचारान् व्यधुर्मोहप्रशान्तये ॥
व्यपैति न यदा मूर्छा तच्छीतोपचारतः । तस्यास्तदैकयानीतं रत्नेशस्नपनोदकम् ॥
तदुक्षणात् क्षणादेव तन्मूर्छा विरराम ह । सुप्तोत्थितेव साऽवादीन्मुहुः शिवशिवेति च ॥

स्कन्द उवाच ।

श्रद्धावतां स्वभक्तानामुपसर्गे महत्यपि । नोपायान्तरमस्त्येव विनेश्वरणोदकम् ॥
ये व्याधयो हि दुःसाध्या बहिरन्तःशरीरगाः । श्रद्धयेशोदकस्पर्शात्ते नश्यन्त्येव नान्यथा ॥
सेवितं येन सततं भगवच्चरणोदकम् । तं बाह्याभ्यन्तरशुचिं नोपसर्पति दुर्गतिः ॥
आधिभौतिकतापं च तापं चाप्याधिदैविकम् । आध्यात्मिकं तथा तापं हरेच्छ्रीचरणोदकम्॥
व्यपेतसंज्वरा चाथ गन्धर्वतनया मुने ! । उचितज्ञेति होवाच ताः सखीः स्निग्धशोभिनीः ॥
शशिलेखेऽनङ्गलेखे ! चित्रलेखे ! मदाहिते । यूयं कुण्ठितसामर्थ्याः कुतो वस्ताः कलाः क वा॥
मत्प्रियप्राप्तये सम्यगुपायोऽस्ति मयेक्षितः । रत्नेश्वरानुग्रहतोऽनुतिष्ठत हितं हिताः! ॥
शशिलेखेऽभिलषितप्राप्त्यै लेखांस्त्वमालिख । संलिखानङ्गलेखे ! त्वं यूनः सर्वावनीचरान्॥
चित्रज्ञे ! चित्रलेखे ! त्वं पातालतलवासिनः । किञ्चिद्विविभवचारुतारुण्यालङ्कृतीम् लिख ॥
अथाकर्ण्येति ताः सख्यस्तच्चातुर्यं प्रवण्यं च । लिलिखुः क्रमशः सख्यो यूनोयौवनशेवधीन्॥
निर्घत्कौमारलक्ष्मीकाम्युंवस्त्वश्रीसमावृतान् । प्रातःसन्ध्येव गन्धर्वी नृपद्मांस्तानवैक्षत ॥
सर्वान्सुरनिकायान्सा व्यलोकयच्चुभेक्षणा । न चाचलयं जहावक्ष्णोस्तेषु स्वर्लोकवासिषु॥
ततो मध्यमलोकस्थान्मुनिराजकुमारकान् । विलोक्यापि न सा प्रीतिं काप्याप प्रेमनिर्भरा॥
अथ रत्नावली बाला कर्णाभ्यर्णविलोचना । दृशौ व्यापारयामास बलिसद्मयुवस्वपि ॥
दितिजान्दनुजान् वीक्ष्य सा गन्धर्वी कुमारकान् । रतिं बबन्ध न क्वापि तापिता मान्मथैः शरैः॥
सुधाकरकरस्पृष्टाप्यसिन्दूनाङ्कयष्टिका । पश्यन्ती नागयूनः सा किञ्चिदुच्छ्वसिताऽभवत् ॥
भोगिनस्तान्विलोक्यापि चित्रं चित्रगतानथ।मनाक्सम्भुक्तभोगेव क्षणमासीत् कुमारिका ॥
यूनः प्रत्येकमद्राक्षीदशेषान् शेषवंशजान् । तक्षकान्वयगांस्तद्वदथ वासुकिगोत्रजान् ॥
पुलीकानन्तकर्कोटभद्रसन्तानगानपि । दृष्ट्वा नागकुमारांस्तान् शङ्खचूडमथैक्षत ॥
शङ्खचूडेक्षणादेव परां लज्जां बभार सा । उद्भिन्नपुलकाप्यासीदङ्गप्रत्यङ्गसन्धिषु ॥
त्रपाभरतोऽज्ञायि तत्कौमारहरो वरः । तया वैदग्ध्यधरया क्षणतश्चित्रलेखया
अथ चित्रपटीं चित्रलेखा चित्रपटाञ्चलम् । परिक्षिप्यावृणोत्तूर्णं परिहासैकपेशला ॥
रत्नावली चित्रलेखां ह्रिया मौनावलम्बिनी । दृशा कुटिलयाऽद्राक्षीत्प्रस्फुरद्दशनाम्बरा ॥
कटाक्षितानङ्गलेखा तयाथ शशिलेखया । चित्रलेखापरिक्षिप्तपटाञ्चलमपाकरोत् ॥
वसुभूतिसुता साथ कन्या रत्नावली शुभा । शङ्खचूडान्ववाये तं रत्नचूडमवैक्षत ॥
तद्वीक्षणक्षणाद् दृष्टिरानन्दाश्रुभिरावृता । कपोलभित्तिरभवत्स्वेदोदकणिकाञ्चिता ॥
चकम्पे गात्रलतिका भूतरोमाञ्चकञ्चुका चित्रन्यस्तेव सस्तम्भ क्षणं मुकुलितानना ॥
ततः स चित्रलेखां तामेत्याश्वासयदातुराम् । मौत्सुक्यं व्रज गन्धर्वि! सिद्धस्तेऽद्य मनोरथः॥
एतस्यावगतं सर्वं देशनामान्वयादिकम् । मा विषीदालि ! सुलभस्त्वेष रत्नेश्वरार्पितः ॥
अहो ! सद्वरावाप्त्या रत्नेशेनासि तोषिता । उत्तिष्ठ यामः सदनं रत्नेशः सर्वदा हि नः ॥
अथ दैववशात्तास्तु पश्यन्ता दृष्टा गगनाध्वगाः । सुबाहुना दानवेन पातालतलवासिना ॥
गृहीत्वा ताश्चतस्रोऽपि निरगाद्दानवो गृहम् । हरिविकटदंष्ट्रास्यः प्रान्तरे हरिणीरिव ॥

तास्तं विलोक्य गन्धर्व्यो दंष्ट्राविकटिताननम् । रुधिरारुणनेत्रं च जाता वेपथुभूमयः ॥
हा! मातर्हा पितस्त्राहि हा विधे! मा विधेहि तत् । यदेतत्कर्तुमारब्धमनाथास्वतिनिष्ठुरम् ॥
हा दैव! मन्दभाग्याभिः किमस्माभिरनुष्ठितम् । सुकृते तत्र वार्तापि न चित्ते ऽप्यागता क्वचित् ॥
शिशुक्रीडनकं हित्वा हित्वा रत्नेश्वरार्चनम् । पित्रोः स्वाधीनसच्चेष्टा दुष्टं विद्मो न किञ्चन ॥
अधोमुखनता दीना हीना नाथेन कोऽत्र नः । इति त्राणार्थिनीर्बालाः शम्भो! रत्नेश! सर्वग!
इत्थं गन्धर्वतनया विलपन्तीः कृपातुरम् । शुश्राव नागराजोऽसौ रत्नचूडो महामनाः ॥
कोऽसौ मत्स्वामिनो नाम रत्नेशस्य महेशितुः । लिङ्गराजस्य गृह्णाति कर्मबन्धनभेदिनः ॥
पुनरप्यार्तरावं स श्रुत्वा बालामुखेरितम् । रत्नेश! रक्षरक्षेति गृहीतास्त्रो विनिर्ययौ ॥
तं वसासवपानेन महामांसनिषेवणात् । अत्यन्तोन्मत्तदुश्चेष्टं रत्नचूडो निरैक्षत ॥
अभ्याक्षिपच्च रे दुष्ट! शिष्टकन्यापहारक! । मद्दृष्टिगोचरं यातः क्व यास्यस्यद्य रेऽधम! ॥
मम बाणाहतप्राणः प्रयाणं कुरु दुर्मते! । आर्तत्राणोद्यतमतेर्वैवस्वतपुरं प्रति ॥
रत्नेश्वरस्य येनापि प्रलयापद्यपि स्फुटम् । गृहीतं न भवाद्गम्यस्तेषु भीतिर्भयात्मसु ॥
रत्नेश्वरमहानामकृतत्राणास्तु ये नराः । तेषां जन्मजराव्याधिकलिकालभयं कुतः ॥
इत्युक्त्वा ता भयत्रस्तास्तन्मुखप्रहितेक्षणाः । व्याघ्राघ्राता इव मृगीर्माभैष्टेत्युवाच सः ॥
इत्याश्वास्याथ गन्धर्वीः स वै भुजगराजजः । आकर्णपूर्णमाकृष्य कोदण्डं प्राहिणोच्छरम् ॥
सोऽपि क्रुद्धो दनुजजः पदास्पृष्टभुजङ्गवत् । आविध्य कालदण्डाभं परिघं व्यसृजन्महत् ॥
हृदि रत्नेश्वरं लिङ्गं यस्य सम्यग्विजृम्भते । अलातदण्डवत्तस्मिन् कालदण्डोऽपि जायते ॥
अन्तरेव स चिच्छेद परिघं स्वकमहेषुभिः । दुर्वृत्तस्य यथेहायुर्विच्छिद्येतान्तरैव हि ॥
ततोऽस्य बाणं चिक्षेप कालानलसमप्रभम् । स बाणस्तस्य हृदयं प्रविश्य प्रगावेभ्यच ॥
प्राणानस्य विनिर्वास्य स्वयं दूरमगात्पुनः ॥
इतीत्थं तस्य दौरात्म्यं सर्वं विज्ञाय तत्त्वतः । दिगङ्गनापुरः ख्यातुमिव नागात्मजो गतः ॥
अन्यायोपार्जितैर्द्रव्यैर्यः सुखं भोक्तुमिच्छति । तानि द्रव्याणि यान्त्येव सप्राणानि कुतः सुखम् ॥
इति तं दानवं हत्वा नागराजो महाबली । प्रत्युवाचाथ ताः कन्याः का यूयं कस्य चात्मजाः ॥
दुरात्मना कुतोऽनेन सङ्गता दनुजन्मना । क्व वा रत्नेश्वरं लिङ्गं भवतीभिर्विलोकितम् ॥
यस्य नामाक्षरोच्चाराद्व्यपेताः परमापदः । यूयमाशु तदाख्यात येन जानामि तत्त्वतः ॥
इति श्रुत्वा गिरस्तस्य नितरां प्रेमनिर्भराः । परस्परं मुखं वीक्ष्य कोऽसौ स्याद् दृष्टपूर्ववत् ॥
अकारणसखा कोऽसौ प्रान्तरे समुपस्थितः । निजप्राणान्पणीकृत्य येन त्राताः स्म बालिकाः
अस्य सन्दर्शनादेव स्वभावचपलान्यपि । मन्थराणीन्द्रियाणि स्युः परिपीय सुधामिव ॥
यातुमन्यत्र नो नेत्रे प्रोत्सहेते यथा तथा । अन्यद्वस्त्वन्तरं प्रेक्ष्य रमणीयतरं त्वपि ॥
वचःपीयूषमाधुर्यं नितरां प्राप्य नः श्रुती । शब्दान्तरग्रहापेक्षां न कुर्वाते सुजन्मनः ॥
आप्लुतः पङ्गुतामेतौ पादौ नश्चञ्चलावपि । अमुं युवानमालोक्य चौरं नः सन्मनोमणेः ॥
इति ब्रुवन्त्यस्ता बालाः परस्परमनुल्बणम् । दृष्ट्वापि चित्रं मध्यस्थे विविदुस्तं न बालिकाः
अतीवभीषणाकारदनुजस्यातिसाध्वसात् । अन्धीभूतेक्षणास्तं नाज्ञासिषुर्हरिणीक्षणाः ॥
ऊचुश्च तं युवानं ता निजजीवितरक्षिणम् ॥
यदङ्ग! भवता पृष्टं स्नेहनिर्भरचेतसा । तदाचक्षामहे सर्वमवधेहि क्षणं मनः ॥
इयं गन्धर्वराजस्य वसुभूतेस्तनूभवा । कन्या रत्नावली नाम गुणरत्नमहाखनिः ॥
वयं वयस्य एतस्याश्छायेवानुगताः सदा । आरभ्य बाल्यमप्येषा लिङ्गं रत्नेश्वराभिधम् ॥
याति पित्राभ्यनुज्ञाता काश्यामर्चयितुं सदा । वरोऽपि दत्तस्तेनास्यै प्रसन्नेनाथ शम्भुना ॥
हरिष्यतीति यः स्वप्ने कौमारं ते कुमारिके! । तव नामसमानाख्यः स ते भर्ता भविष्यति ॥
युवानं स्वप्नभोक्तारं प्राप्याप्येषा सुदुःखिता । पुनस्तद्विरहोत्थेन वह्निनाऽतीव तापिता ॥

कलाकौशल्यतोऽस्माभिः सोऽपि चित्रे प्रदर्शितः।यस्य ग्रामो न नामापि नान्वयोऽप्यत्रबुध्यते
तं दृष्ट्वा चित्रलिखितमप्येषा जीविता पुनः । ततो रत्नेश्वरं नत्वा स्वगृहायोत्सुकाभवत् ॥
यान्तीस्ततोऽनया सार्धं प्रान्तरे गगनाध्वनि । अतर्किताभमश्चास्मान् हृत्वापातालमाविशत्॥
अनन्तरं भवानेव तं वेत्ति दनुजाधमम् ॥

अङ्ग ! इत्येव वृत्तान्तो निजोऽस्माभिरुदीरितः । प्रसादं कुरु चास्माकं पुनः कोऽसि कृपानिधे!॥
यदाप्रभृति चास्माभिः स दृष्टो दुष्टदानवः । तदाप्रभृति नो नेत्रे विद्युतेव हृतप्रभे ॥
कान्दिशीका भयाज्जाता न विद्मः किञ्चिदेव हि । क वयं का वयं कस्त्वं किं जातं किं भविष्यति
निशम्येति स पुण्यात्मा नागराजकुमारकः । आश्वास्य ता भयत्रस्ताः प्रोवाचेदं च पुण्यधीः ॥
मया सह समायात रत्नेशं दर्शयामि वः । इत्याहूय स ता निन्ये क्रीडावापीं सुखोदकाम् ॥
विचित्रमणिसोपानां हंसकोककृतारवाम् । कवीनां वाञ्छितव्याजात्स्वागतं कुर्वतीमिव ॥
तत्र तेनाभ्यनुज्ञाताः क्रीडावाप्यां निमज्ज्य ताः । सचैलपुष्पाभरणाः प्रोन्ममज्जुस्ततः पुनः ॥
बहिर्निर्गत्य गन्धर्व्यः पश्यन्त्यः स्थगिता इव । रत्नेशालयमालोक्य कालराजसमीपतः ॥
परस्परं ततः प्रोचुर्गन्धर्व्यो विस्मिता इव । स्वप्नोऽयं किन्नु वा सत्यं खेलो रत्नेश्वरस्य वा॥
वयमेव हि वा भ्रान्ता गन्धर्व्यो न वयं किमु । किमेतन्नेत्र जानीम ऐन्द्रजालिकखेलवत् ॥
एषोत्तरवहा गङ्गा स्फुटमेव भवेदिह । शङ्खचूडस्य वाप्येषा शङ्खचूडालयस्त्वसौ॥
एतत्पद्मपदं तीर्थमेष वागीश्वरालयः । यस्य सन्दर्शनादेव वाग्विभूतिर्विजृम्भते ॥
शङ्खचूडेश्वरश्चैष शङ्खचूडप्रतिष्ठितः । यस्य सन्दर्शनात्पुंसां न भयं कालसर्पजम् ॥
एषा मन्दाकिनी नाम दीर्घिका पुण्यतोयभूः। यस्यां कृतोदका मर्त्या मर्त्यलोके विशन्ति न॥
असावाशापुरी देवी या स्तुता त्रिपुरारिणा । त्रिपुरं जेतुकामेन मन्दाकिन्यास्तटे शुभे ॥
याद्यापि पूजिता मर्त्यैराशां पूरयतेऽर्थिनाम् । मन्दाकिन्याः प्रतीच्यां तु एष सिद्धयष्टकेश्वरः॥
भवेद्यस्य सपर्यातो गृहे सिद्ध्यष्टकं स्फुरम् । कुण्डं सिद्ध्यष्टकाख्यं च तत्रैव विरजोदकम् ॥
यत्र स्नात्वा कृतश्राद्धो विरजस्को दिवं व्रजेत्।मूर्तास्ताः सिद्धयश्चाष्टौ याः काश्यां सर्वसिद्धिदाः
सर्वसिद्धिप्रदश्चासौ महान् गजविनायकः । विनायकाः प्रणश्यन्ति यस्मै प्रणमतां नृणाम् ॥
असौ सिद्धेश्वरस्योच्चैः प्रासादः काञ्चनोज्ज्वलः।रत्नध्वजपताकाश्च सिद्धिः स्याद्यद्विलोकनात्
क्षेत्रस्य मध्यमे भागे मध्यमेश्वर एष वै । मध्याधोलोकयोर्मध्ये न वसेद्यस्य वीक्षणात् ॥
मध्यमेशं समभ्यर्च्य नरो मध्यमविष्टपे । आसमुद्रक्षितीन्द्रः स्यात्ततो मोक्षं च विन्दति ॥
ऐरावतेश्वरं लिङ्गं तत्प्राच्यामिष्टसिद्धिकृत् । दृश्यते यत्पताकायां रम्य ऐरावतो गजः ॥
वृद्धकालेश्वरस्यैष प्रासादो रत्ननिर्मितः । प्रतिदर्शं वसेद्यत्र रात्रौ चन्द्रः सतारकः ॥
यस्य सन्दर्शनान्नृणां न कालः प्रभवेद्भवे । न कलिः प्रभवेत्सत्यं न च कल्मषराशयः ॥
इति यावत्कथां चक्रुः सम्भ्रान्ता इव बालिकाः । तावद्वसुविभूतिः सः गन्धर्वस्त्वरयाययौ ॥
नारदाच्छ्रुतवृत्तान्तः सुबाहुदनुजन्मनः । रत्नावली सुता प्रीता ससखीका यथा हृता ॥
रत्नेश्वरात्समायान्ती शून्ये गगनवर्त्मनि । यथाऽनयच्च पातालं यथा युद्धमभूत्पुनः ॥
यथा रत्नेशभक्तेन रत्नचूडेन घातितः । स सुबाहुर्दनुजनुर्महेष्वासेन चेषुणा ॥
यथा च पृष्टवृत्तान्तो वापीमार्गेण चानयत् । शङ्खचूडस्य वापीं तां पातालेषु प्रवर्तिनीम् ॥
यथा च प्राप्य निर्याताःकाशीं दृष्ट्वापि बालिकाः।भृशं सम्भ्रान्तिमापन्नाःपश्यन्त्योऽपि समुत्सुकाः
दृष्ट्वा गन्धर्वराजस्तां पुनर्जातामिवात्मजाम् । सवयस्यां मनाग्ग्लानमुखपङ्कजसुश्रियम् ॥
परिष्वज्य समाघ्राय ललाटफलकं मुहुः । अङ्कमारोप्य पप्रच्छ सर्वं वृत्तान्तमादरात् ॥
अथ सा कथयामास दनुजापहृतेः कथाम् । रत्नेश्वरवराप्तिं स्वप्नावस्थां विहाय च ॥
रत्नावलीमनोवृत्तिं विज्ञायाथ मुखेङ्गितैः । शशिलेखा समाचष्ट स्पष्टवर्णैः सविस्तरम् ॥
तुतोष नितरां सोऽथ गन्धर्वाधिपतिः कृती । प्रभावं वर्णयामास मुदा रत्नेश्वरस्य च ॥

स्कन्द उवाच ।
आकर्णय मुनिश्रेष्ठ ! विन्ध्यवृद्धिविवर्धन ! । प्रत्यहं रत्नचूडोऽपि वापीमार्गेण संयमी ॥
नागलोकात्समागत्य स्नात्वा मन्दाकिनीजले । रत्नेश्वरं समभ्यर्च्य रत्नाञ्जल्यष्टकेन वै ॥
सुवर्णपङ्कजान्यष्टौ समर्पयति हृष्टवत् ॥
एकदा स्वप्नसमये रत्नेशो लिङ्गरूपधृक् । रत्नचूडमुवाचेदं निजभक्तं दृढव्रतम् ॥
मानवेन हृतां कन्यां मोचयिष्यति यां भवान् । तं दानवं रणे हत्वा तां पत्नीं समवाप्स्यसि ॥
इति स्मरन्वरं सोऽथ नागराजो महामनाः । तां कन्यां दानवं हत्वा विमोच्य निजवीर्यतः ॥
वापीमार्गेण पातालादानिनाय पुनर्महीम् । स्वयं च साधयाञ्चक्रे प्रत्यहं नियमं सुधीः ॥
लिङ्गं समर्चयित्वाथ कृत्वा चापि प्रदक्षिणम् । यावद्बहिः समागच्छन्नम्याद्रत्नेशमण्डपात् ॥
तावद्गन्धर्वराजाय ताभिः स वसुभूतये । सोऽयं सोऽयं युवा धन्यस्तर्जन्यग्रेण दर्शितः ॥
गन्धर्वराजस्तं दृष्ट्वा नागराजकुमारकम् । अतीव स्मेरनयनः संप्रहृष्टतनूरुहः ॥
मनस्येवं च संवर्ण्य तद्रूपं सवयोऽन्वयम् । धन्योऽस्म्यनुगृहीतोऽस्मि रत्नेशेन वरार्पणात् ॥
कन्या धन्यतरा चेयमनुरूपोऽस्ति यत्पतिः ॥
संप्रधार्येति हृद्येनमवधार्य च सुन्दरम् । पृष्ट्वा तन्नामगोत्रं च गणयित्वा बलाबलम् ॥
रत्नेश्वरस्य पुरतस्तस्मै कन्यां ददौ मुदा । नीत्वा गन्धर्वलोकं तं कृतकौतुकमङ्गलम् ॥
मधुपर्केण सम्पूज्य पाणिमग्राहयत्ततः । वैवाहिकेन विधिना ददौ रत्नान्यनेकशः ॥
शशिलेखानङ्गलेखा चित्रलेखापि कुम्भज ! । विज्ञाप्य स्वजनेतारं वरयामास तं पतिम् ॥
उपयम्य चतस्रोऽपि स गन्धर्वसुताः शुभाः । रत्नचूडो जगामाथ ताभिः स्वपितृमन्दिरम् ॥
यथा च सप्तभिः सार्धं श्रुतिभिः प्रणवः शिवे ! । स्वपित्रोश्चरणौ नत्वा नवोढाभिः स नागराट्
विनिवेदितवृत्तान्तो रत्नेशानुग्रहस्य च । उवास ताभिः ससुखं पितृभ्यामभिनन्दितः ॥
ईश्वर उवाच ।
रत्नेश्वरस्य लिङ्गस्य मम स्थावररूपिणः । सर्वेषां सर्वदस्यास्य प्रभावो गिरिजेऽतुलः ॥
अस्मिंल्लिङ्गे परां सिद्धिं प्रापुः सिद्धाः सहस्रशः । गुप्तमासीदिदं लिङ्गमद्ययावत्सुमध्यमे !
तव पित्रा हिमवता मम भक्तेन सर्वथा । पुण्यार्जितैर्महारत्नै रत्नेशः प्रकटीकृतः ॥
अस्मिंल्लिङ्गे मम प्रीतिर्नितरामद्रिराजजे ! । वाराणस्यामिदं लिङ्गं पूजनीयं प्रयत्नतः ॥
नानारत्नानि लभ्यन्ते रत्नेशानुग्रहादुमे ! । स्त्रीरत्नपुत्ररत्नादि स्वर्गमोक्षावपि प्रिये ! ॥
योऽत्र रत्नेश्वरं नत्वा मृतो देशान्तरेष्वपि । न स स्वर्गादिहागच्छेत्कल्पकोटिशतैरपि ॥
असितायां चतुर्दश्यामुपोष्य निशि जागरात् । रत्नेशसन्निधौ देवि ! मम सान्निध्यमाप्नुयात् ॥
अस्य लिङ्गस्य पूर्वेण त्वयाजन्मान्तरे प्रिये ! । दाक्षायणीश्वरं लिङ्गं मद्भक्त्यात्र प्रतिष्ठितम् ॥
तस्य सन्दर्शनादेव न नरो याति दुर्गतिम् । अम्बिका नाम गौरी त्वं तत्राहं चाम्बिकेश्वरः ॥
मूर्तः षडाननस्तत्र तव पुत्रः सुमध्यमे ! । एतत्त्रयं नरो दृष्ट्वा न गर्भं प्रविशेदुमे ! ॥
रत्नेश्वरस्य माहात्म्यं मया ते समुदीरितम् । गोपनीयं प्रयत्नेन कलिकल्मषचेतसाम् ॥
इदं रत्नेश्वराख्यानं यः पठिष्यति सर्वदा । स पुत्रपौत्रपशुभिर्न वियुज्येत कर्हिचित् ॥
श्रुत्वा रत्नेश्वरोत्पत्तिं सेतिहासां नरोत्तमः । अनूढो लभते सत्यं कन्यारत्नं कुलोचितम् ॥
कन्यापीमं समाकर्ण्य त्वितिहासं मनोहरम् । श्रद्धया सत्पतिं प्राप्य भविष्यति पतिव्रता ॥
इतिहासमिमं श्रुत्वा नारी वा पुरुषोऽपि वा । न जातिवष्टवियोगाग्नितापेन परितप्यते ॥
इति श्रीस्कन्दपुराणे काशीखण्डे रत्नेश्वरप्रशंसनं नाम सप्तषष्टितमोऽध्यायः ॥

श्रीधर्माधिकारिकृष्णपण्डितविरचितम्

# कामकन्दलं

नाम

# नाटकम्

---

पायाद्वो भूतनाथो निशि शिखरिसुतासङ्गलीलाविलासै-

र्जाते काले निशीथे स्मृत[3]सुरतटिनीकेलि[4]रुच्चैः प्रिये हे !

उक्त्वा भङ्गालहर्यां तव चिरविरहव्याकुलोऽहं सकोपां

वक्रभ्रूशोणनेत्रामथ निजमहिषीं वञ्चयन्[5] यो विटेशः ॥१॥

अपि च—

भूतिधिया निशि लिप्तं कज्जलमङ्गे महेशेन ।

प्रातर्वीक्ष्य विरूपं मुहुर्हसति साम्बिका जयति ॥ २ ॥

---

१ अत्र प्रस्तुते शिवकेलिवर्णनेऽप्रस्तुतस्य वक्ष्यमाणस्य नाट्यनायकस्य श्रीपतेः केलिरूपस्य बीजस्य स्फूर्त्या समासोक्त्यलङ्कारेण नान्दीत्वम् । उक्तं च नाट्यदर्पणे—'यस्यां बीजस्य विन्यासो ह्यभिधेयस्य वस्तुनः । श्लेषेण वा समासोक्त्या नान्दी पत्रावलीति सा' इति ।

२ अनेनाऽनवधानत्वबीजग्राहकत्वं सूचितम् ।

३ अत्र स्मृत्यलङ्कारः स्मरणात् ।  ४ मदातिशयादिति भावः ।

५ अत्र भ्रान्त्यलङ्कारः भ्रमात् ।

६ अत्र वाक्यान्यथायोजनहेतुकावस्थाभेदेन शङ्किते तात्त्विकाऽपलापाच्छेकापह्नुतिरलङ्कारः । अनेन दाक्षिणनायकत्वं ध्वन्यते । उक्तं च शृङ्गारतिलके—'यो गौरवं भयं प्रेम सद्भावं पूर्वयोषिति । न मुञ्चत्यन्यचित्तोऽपि ज्ञेयोऽसौ दाक्षिणो यथा' इति ।

७ अनवधानत्वादिति भावः ।

८ अत्र शिवस्य स्वधावल्यगुणत्यागपूर्वकान्यदीयनीलगुणग्रहणात्तद्गुणालङ्कारः । अत्र शिववैरूप्यातिशयवर्णनेनाग्रिमभूमिकारूपवैरूप्यचारुतातिशयो ध्वन्यते ।

अपि च—

लास्ये गात्रसमीर[1]दीपितललाटस्थेक्षणाग्निस्फुर-
त्कीलाऽऽशीर्णतुषाररश्मिविगलत्पीयूषधाराभरैः[2] ।
जीवद्भिर्गललम्बिहारलतिका[3]मुण्डैः स्तुतस्त्र्यम्बकः
शम्भो ! शङ्कर ! चन्द्रचूड ! गिरिशेत्येवं मुदे[4] जायताम् ॥३॥

( नान्द्यन्ते )

**सूत्रधारः**[5]—अलमतिविस्तरेण[6] । आदिष्टोऽस्मि सतत[7]मन्दाकिनीमधुरतरतरङ्गराजिसंसिक्तपूततटनिकटविहिततपःप्रभाभासुरैर्निखिलदिग्भ्रान्तचतुर्दशविद्यावादवादीन्द्रवृन्दमर्दनो[11]दयाद्रिरूढप्रौढप्रतापतपने[12]नातपसन्तापितबुध[13]जनैः श्रीमद्भिर्द्विजवरैः शारदे नवरात्रे दुर्गादर्शनयात्रामहोत्सवे नाट्यमभिनेतव्यमिति । तदिदानीं केनचिदनिर्वचनीय[14]प्रकरणेन विनोदयितुमिच्छामि[15] ।

---

१ गात्रेऽतिकम्पनत्वादिति भावः ।

२ अत्र पूर्वार्धे समासबाहुल्यादोजो नाम गुणः ।

३ मयूरव्यंसकादित्वात्समासः । अत्र विषयिण्या लतिकाया विषयेण हारेण सह तद्रात्मतया मुण्डेष्वन्वयात्परिणामालङ्कारः । 'पुरुषो व्याघ्र इवेतिवत् 'उपमितं व्याघ्रादिभि'रिति समासे 'हारो लतिकेवे'त्युपमालङ्कारः । उभयोः समानाभ्यर्हितत्वेन समप्राधान्यसङ्करालङ्कारः ।

४ मुदं दातुमित्यर्थः । 'क्रियार्थोपपदस्ये'ति चतुर्थी ।

५ वक्तीति शेषः । सूत्रं नृत्यकर्मानुष्ठानं धारयति तथोक्तः ।

६ नान्दीपाठेनैव कालो न नेतव्य इति भावः ।

७ अत्र जातिस्थधर्मवर्णनात्स्वभावोक्तिरलङ्कारः ।

८ अनेनातिशयपुण्याधारत्वं तटस्य सूचितम् ।

९ एतेन श्रेयोऽतिरेको व्यज्यते ।

१० अनेन प्रतापस्य जगद्व्यापकत्वं ध्वनितम् ।

११ अत्र मर्दनस्यान्यरूपेणोदयाद्रिरूपेण रूपवत्करणाद्रूपकालङ्कारः ।

१२ अत्रापि रूपकम् । १३ एतेन पाण्डित्यातिशयो ध्वन्यते ।

१४ एतेन लास्यस्य चारुतरत्वं सूच्यते । १५ सभ्यानिति शेषः ।

भवन्तो वेदान्तप्रकथितचिदानन्दरसिका
इमे पौरा नानारसविविधगोष्ठीपरिचयाः ।
इदं[1] द्रष्टुं याताः[2] सरसरचितं नूत्नकविना
ह्यतो द्रष्टव्यं तद्गिरिवरसुता[3]ऽग्रे प्रभवति ॥ ४ ॥

**मारिषः**—तदधुना श्रीदुर्गादेव्याः पुरस्तादभिनेतव्यं भवता । सन्त्य[4]स्मदादयः सभासदोऽपि तत्कौतुकस्यावलोकनाय ।

**सूत्रधारः**—तद्भवतु । निलयं गत्वा भार्यामाहूय सङ्गीतकमनुतिष्ठामः[5] (परिक्रम्यावलोक्य नेपथ्याभिमुखम्[6]) प्रिये ! इतस्तावत्[7] ।

(प्रविश्य)

**नटी**[8]—इअम्हि । अज्जउत्तो आणवेदु, को णिओओ[9] अणुचिट्ठीअदुत्ति[10] ।

**सूत्रधारः**—
दैत्याः[11] शोणितकारणा[12]स्त्रिजगति व्याप्ताः क्षणाच्चर्विता[13]
हुङ्कारेण कृतः स धूम्र[14]नयनः शीघ्रं यया भस्मसात् ।
क्षिप्तं[15] चोड्डुकदम्बकं कचभरैर्देवारिसम्मर्दिनी
सा दुर्गा नटनाऽजिरे विजयते भर्गस्य देहार्धगा[16] ॥ ५ ॥

---

१ नाट्यम् । २ नृत्यद्रष्टार आर्या इत्यर्थः ।
३ दुर्गेत्यर्थः । ४ सन्नद्धा इति शेषः ।
५ बहुवचनं सर्वभरताभिप्रायगर्भम् ।
६ रङ्गभूम्येकदेशस्थरक्तवस्त्रनिर्मितभूमिकाग्रहणगृहमित्यर्थः ।
७ आयाहीति शेषः । ८ सूत्रधारप्रिया । वक्तीति शेषः ।
९ नृत्यस्येति शेषः ।
१० 'इयमस्मि । आर्यपुत्र आज्ञापयतु, को नियोगोऽनुष्ठीयताम् ।' इति संस्कृतम् ।
११ अत्राद्भुतो रसः । १२ रक्तबीजाः ।
१३ स्पष्टं चेदं मार्कण्डेयपुराणे । १४ धूम्राक्षः ।
१५ इदमपि तत्रैव स्पष्टम् ।
१६ अत्र देहार्धगेत्यनेन भस्मसात्करणेन चर्वणेन च सृष्टिस्थिति-

अपि च—

लोलाऽऽस्यालिलसत्प्रफुल्लसुमनोजालोल्लसत्कानने
भिल्लीवेशमनङ्गवेगजनकं धृत्वा चलन्ती शनैः ।
लोलापाङ्गतरङ्गरङ्गसुदृशा संमोहयन्ती शिवं
चञ्चच्चञ्चलनूपुरध्वनियुता वर्वर्ति सर्वार्थदा ॥ ६ ॥

इमे सामाजिकाः कान्ते ! शास्त्रगम्भीरवारिधौ ।
निमज्ज्याप्तसुसिद्धान्ताः सच्चिदानन्दमूर्तयः ॥ ७ ॥

तदेषां पुरोऽभिनेतव्यम् ।

**नटी**—( सविस्मयम् ) अज्जउत्त ! अच्चरिअं अच्चरिअं । जे णिरंतरजमणिअमजुताः सत्थदंसणजाणिदणिच्चप्पआसप्फुरन्तपरमेसरा ते विमलसहाआ कहं पेक्खन्ति ।

**सूत्रधारः**— निसर्गसौम्यस्वभावा यथासमयं विविधरसानास्वादयन्ति पुनः स्वभावमेवानुवर्तन्ते । पश्य—

प्रलयान्तातिसंक्षोभदग्धस्थावरजङ्गमः ।
स एव हि ललाटाग्निः पार्वतीवदने हिमः ॥ ८ ॥

---

प्रलयकरत्वं ध्वन्यते । न च जगद्रक्षणायैव चर्वणमिति वाच्यम्, तस्य व्यञ्जनामूलव्यङ्ग्यत्वात् । तथा हि—आधुनिकजगद्रक्षणपूर्वकजगद्घ्यात दैत्यानां क्षणाच्चर्वणेनैवमेवं तत्कालीनामिति व्यङ्ग्यम्, तेन तत्करत्वमिति व्यज्यत इति भावः ।

१ चञ्चलभ्रमरपङ्क्तिः । अत्र शृङ्गारो रसः । न चात्र 'तर्वाल्युर्वी'-तिवल्लकारयकारसंयोगाद्विसन्धिदोष इति वाच्यम् । जगदम्बावर्णनेन गुणत्वात्सौन्दर्यातिशयादिति भावः ।

२ अनेनैकवीराख्यानं सूक्तम् । ३ अत्र परिणामालङ्कारः ।

४ नाट्यमित्यर्थः ।

५ 'आर्यपुत्र ! आश्चर्यमाश्चर्यम् । ये निरन्तरयमनियमयुताः शास्त्रदर्शनज्ञातनित्यप्रकाशस्फुरत्परमेश्वरास्ते विमलसहायाः कथं प्रेक्षन्ते ।' इति संस्कृतम् ।

६ सौम्या एव भवन्तीत्यर्थः ।

७ शीतगुणवानित्यर्थः । 'तुषारः शीतलः शीतो हिमः सप्ताऽन्यलिङ्गकाः' इत्यमरः ।

नटी—[1]भोदु । उपसप्पामि । ( परिक्रम्यावलोक्य नेपथ्याभिमुखम् ) महाभाअ इदो दाव ।

भरतः[2]—( प्रविश्य[3] )

प्रचण्डखड्गघातेन खण्डितासुरमण्डलाम् ।
नौमि तां चण्डमुण्डघ्नीं चण्डीं मुण्डस्रजं शिवाम् ॥ ९ ॥

( इति पुष्पाणि[4] क्षिप्त्वा ) किमस्ति महानुभावे ! ।

नटी—[5]अज्ज ! सम्पदं भअवदीए अग्गदो किम्पि कोदूहलं कादव्वं अत्थि ।

भरतः—आर्ये ! स्मृतं स्मृतम् । यत् पूर्वं धर्माधिकारिकृष्णकविना कामकन्दलं[6] नाटकं निर्मायास्मभ्यं समर्पितमासीत् , तत् उदितशृङ्गाररसप्रयोगेणाभिनीयतेऽधुना[7] ।

सूत्रधारः—( श्रुत्वैतत् ) सावधाना भवन्तु भरताः । श्रोतव्यं मारिषैः । अस्ति कुत्रचित्प्रकामा नगरी । तत्र—

आस्तेऽरातिमहीपतिक्षितिरुहक्षुभ्यत्प्रचण्डानलः[8][9][10]
कान्तावृन्दसुरञ्जने किमपरः कृष्णो[11] रसामण्डले ।

---

१ 'भवतु । उपसर्पामि । महाभाग ! इतस्तावत् ।' इति संस्कृतम् ।
२ नृत्याभिनेता । ३ रङ्गभूमिमागत्येत्यर्थः ।
४ रङ्गभुवि कुसुमप्रक्षेपो भरतसमयः ।
५ 'आर्य ! साम्प्रतं भगवत्या अग्रतः किमपि कौतूहलं कर्तव्यमस्ति ।' इति संस्कृतम् ।
६ कामे अभिलाषमात्रे कं सुखं ददातीति कामकन्दः पट्टनायकः, तं लाति स्वीकरोति सा कामकन्दला । कमित्यव्ययम् । कन्देत्यत्र आतोऽनुपसर्गे कः, लेत्यत्रापि । कामकन्दलामधिकृत्य कृतं नाटकं कामकन्दलम् । 'अधिकृत्य कृते ग्रन्थे' इत्यण् ।
७ अत्र यद्यपि न केवलं शृङ्गाररसस्याभिनयोऽन्येषामपि, तथापि नाट्यनायकयोरनुरागलक्षणस्य तस्यैव प्राधान्यमन्येषां तत्पोषकत्वमिति न दोषः ।
८ एतेन बलित्वमुक्तम । ९ अनेन गतभस्मत्वाद्दीप्तिमत्वमुक्तम् ।
१० एतेन प्रतापित्वं व्यक्तम् । अत्राभेदरूपकालङ्कारः ।
११ अत्र ताद्रूप्यरूपकम् । तेन सुषमत्वं ध्वनितम् ।

नित्योत्सर्गविधानकम्पितसुरागारः सदा चिन्मय-
ब्रह्मानन्दरसप्रसन्नहृदयः श्रीकामसेनोऽधिपः ॥ १० ॥

( इति निष्क्रान्ताः )

इति प्रस्तावना ।

( ततः प्रविशति सानुयायी कामसेनो राजा )

चञ्चत्प्रभाभासुरभद्रपीठे संभाति सभ्यैः परिवेष्टितोऽयम् ।
कीर्तिः प्रतापद्युतिभिः पृथिव्यां नीता सदा पाटलतां च येन ॥ ११ ॥

( अथ तत्तनयविवाहोत्सवे तारुण्यलावण्यपूर्णा कामकन्दलानाम्नी वारविलासिनी नृत्यायाऽऽगात् । )

इति विष्कम्भकः ।

( ततः प्रविशति सवयस्या कामकन्दला । )

लोलल्लोचनवारिजा सुनटनव्यापारकेरपोलपो
यूनां चित्तविहारिणी मदकला मत्तेभकुम्भस्तनी ।
या गत्या जितहंसवामनयना जीयाज्जितेन्द्वानना
सङ्गीतैरधरीकृतामरपुरीरम्भादिवाराङ्गना ॥ १२ ॥

---

१ मामपि खण्डयित्वा दास्यतीति भियेति भावः ।

२ अत्रैकस्य राज्ञो वह्निकृष्णभ्रातृत्वरूपैरनेकधावर्णनादुल्लेखालङ्कारः

३ रङ्गभुव इति शेषः । बहुत्वं सर्वभरताभिप्रायेण ।

४ पूर्ववर्ण्यस्याभिनयसम्बन्ध इत्यर्थः । तदुक्तम्-'अर्थस्य प्रतिपाद्यस्य कथा प्रस्तावना मता' इति । अभिनयेन प्रतिपादयितुं शक्यस्याऽर्थकनं सङ्गतिकरणमिति तदर्थः । भूमिकाग्रहणमित्याशयः ।

५ गृहीततद्भूमिको भरत इत्यर्थः । इति सर्वत्र ।

६ 'कीर्तिर्धवला प्रतापो रक्त' इति प्राक्कविसम्प्रदायादिति भावः ।

७ यः प्रस्तावनार्थः स पदार्थः, तदपरपर्यायोऽयम् । ८ रूपकम् ।

९ कल्पवल्लीत्यर्थः । अनेन अनुपमनर्तकीत्वं व्यज्यते । रूपकम् ।

१० तेन सुन्दरीत्वमुक्तम् । ११ लुप्तोपमालङ्कारः ।

१२ अत्र जयवस्तुना उपमालङ्कारो व्यङ्ग्यः । १३ अत्रापि तथा ।

१४ अत्राप्युपमैव ।

( तदनेहसि विविधविद्योदधिपारङ्गमः शृङ्गारशेखरः श्रीपतिशर्मा[1] द्विजवरो रथ्यायां पर्यटन् आजगाम[2] । )

( ततः प्रविशति श्रीपतिः । )

विद्याविजितवागीशः श्रीमनोमीनजालिकः[3] ।
सौन्दर्यजितकन्दर्पश्चातुर्याश्चर्यमूर्तिमान् ॥ १३ ॥

श्रीपतिः—( आकाशे तत्सङ्गीतध्वनिमाकर्ण्येक्षणगोचरीकर्तुमुत्कण्ठितः प्रतीहारनिरुद्धो द्वार्युपविष्टः, विचिन्त्य )

सभायां केऽपि सङ्गीतशास्त्रज्ञाः सन्ति वा न वा ।
न जानन्त्यधुना सर्वे विस्वरं मुरजध्वनिम् ॥ १४ ॥

प्रतीहारः—भो भो विप्र ! कथं ज्ञातं भवता !

श्रीपतिः—दक्षिणेतरकराङ्गुष्ठहीनस्य मार्दङ्गिकस्य प्रहारेणाऽस्वरो लक्ष्यते । (प्रतीहारोऽस्य नैपुण्यमवलोक्य तद् द्रष्टुं प्रभुं च निवेदयितुमन्तर्जगाम । विलोक्य ) श्रीमद्राजाधिराज ! महाराज !

सुधीकिरीटवज्रांशुनीराजितपदाम्बुजः ।
श्रीपत्याख्यो द्विजवरो द्वारि तिष्ठति चाधुना ॥ १५ ॥

'तेनेह चित्ते चित्रकरश्चमत्कारो दर्शित' इति ( तदुक्तवान्[10] ) ।

कामसेनः—ईदक्षं निपुणतरं शीघ्रमानय भूसुरवरम् ।

( प्रतीहारो झटिति बहिरागत्य राजसन्देशं निवेदितवान् । )

श्रीपतिः—एवं चेद्, यामि सदसि । ( प्रविश्य भूपनमिताऽङ्घ्रिराशीर्वचनं नाटयति- )

त्रिभुवनतले कीर्त्येन्दुर्[11] वै विराजतु भूपते !
तव वितरणे प्रास्तां मेधा ददातु शिवं शिवः ।

---

१ माधवापरनामेत्यर्थः । २ सदःसमीप इति शेषः ।
३ रूपकम् । ४ जालजीवीत्यर्थः ।
५ अत्रैकस्य श्रीपतेरनेकधोल्लेखनादुल्लेखालङ्कारः ।
६ तस्याः कामकन्दलाया इत्यर्थः । ७ वाम इत्यर्थः ।
८ अतिपण्डितानामयं गुरुरिति सूचितम् ।
९ नस्येति भावः । १० नैपुण्यम् ।
११ कीर्तिचन्द्रः । अत्र परिणामालङ्कारः ।

सकलरिपवो नाशं यान्तु स्फुरत्खरतेजसा
हरपदयुगे भक्तिर्नित्यं प्रसर्पतु[1] सर्वदा ॥ १६ ॥

भूपतिः--( अंशुक[2]परिष्कारैः पूजयित्वा )
सफलं जननं जातं त्वत्पादार्चनकारिणः ।
पूता सभा च मे विप्र ! कुलं भावि गतं च यत्[3] ॥१७॥

( ततः कामकन्दलां प्रति[4] ) हे रूपाजीवे ! सकलगुणगणप्रकटनमस्य पुरस्तात्तावत्कार्यं त्वया ।

कामकन्दला—यथाज्ञापयति देवः । ( ततः सा—)
गायति नृत्यति कन्दुकखेलां युगपत्प्रकुर्वती वेश्या ।
शिरसि निधाय घटीयुगमद्भुतमार्यान् सुरञ्जयति ॥ १८ ॥

तद्दिष्टे[5]---
मुखगन्धवाहलुभ्यन्मधुव्रतेनाऽस्य चूचुकं[6] दष्टम् ।
सर्वाङ्गरुद्धपवनं त्यक्त्वा तद्दोकतो[7] न्यवार्येव ॥ १९ ॥

( श्रीपतिः सविस्मयं वोक्ष्य राज्ञा दत्तं भूषणादिकमतिचातुर्यशालिन्या अददात् । )

कामसेनः—( सक्रोधम् ) रे बालिश ! मत्पुर एव त्वया गणिकायै दत्तमतस्त्वं गच्छेति ( निष्कासितवान् ) ।

( श्रीपतिस्तदासक्तस्वान्तो बहिरागत्य विरहानल[8]प्लुष्टो रत्नसेनाख्यछद्मगृहं ययौ । ततः सापि तथाभूता लास्यविरतौ सदनमागत्य विरहाब्धिमग्नापर्यङ्के[9] सुष्वाप । )

रत्नसेनः---( प्रविश्य ) अहो ! तत्कटाक्षकलम्ब[10]क्षुण्णहृदयः श्रीपतिरपि सुष्वाप ?

---

१ प्रेत्युपसर्गवशाद्वर्धतामित्यर्थः । २ वस्त्रालङ्कारैः ।
३ पूतमिति शेषः । अत्र पूता पूतमिति द्विरूपादानात्पदार्थावृत्तिदीपकालङ्कारः ।
४ आज्ञापयतीति शेषः । ५ तस्मिन् काले ।
६ 'चूचुकं तु कुचाग्रं स्यात्' इत्यमरः ।
७ 'छिद्रं निर्व्यथनं रोकम्' इत्यमरः । ८ परिणामः ।
९ परिणामालङ्कारः । १० बाण इत्यर्थः ।

( सखा रत्नसेनः सचकितं विलोक्य धैर्यमवष्टभ्य वैद्यगृहं गत्वा तमानीतवान् । )

( ततः प्रविशति भिषक् )

वैद्योऽनवद्यः स्वगुणैर्नानौषधिकरण्डभृत् ।
व्याधिवारण[1]हर्यक्षो याति रोगविदां वरः ॥ २० ॥

**भिषक्**—( धमनिम्[2]अवलोक्योचे— )

स्मरबाणपीडितोऽयं झटिति ह्येनं तथा[3]विधोपायः ।
उक्तं भेषजमेतज्ज्ञात्वा तस्य स्वकं[4] सम्यक् ॥ २१ ॥

( मुद्रां प्राप्य ) गम्यते !

( इति निष्क्रान्तः । )

( रत्नसेनः सुशीतलपाटलि[5]पुष्पोदकादिनानोपायैस्तं प्रकृतिस्थमचर्करीत् । )

**श्रीपतिः**—( उपचारे कृतेऽप्यनवधानचित्तः सन् )

नयनाञ्जनशोभिताननाब्जं भ्रमराऽऽगुञ्जित[6]गण्डपालिदेशम् ।
चलदीक्षणकोणकोटिलोलं रदनांशुच्छविभूषितं स्मरामि[7] ॥ २२ ॥

अपि च—

कन्दुकखेलनबाहुप्रक्षेपोरोज[8]दर्शनोल्लासम् ।
भ्रमरीखेलनकम्पितनितम्बबिम्बं स्मरा[9]म्यधुना ॥ २३ ॥

अपि च—

तन्मूर्तिर्मम पृष्ठतो मम पुरो मत्पार्श्वतो मद्गृहे
मत्तल्पे मम पत्तने मम वने मत्पुस्तके मत्पथे ।
एवं तन्मयमेव विश्वमखिलं पश्या[10]म्यहं सर्वदा
हा हा ! तद्विरहेण दुःखजल[11]धौ मग्नं सखे ! तारय ॥ २४ ॥

---

१ अत्र परिणामालङ्कारः । २ नाडीमिति यावत् ।
३ कामोपशान्तिरूप इति ध्वनिः । प्रकृतिस्थं कुर्यादिति शेषः ।
४ आत्मीयम् आसक्तिरूपम् । ५ 'गुलाब' इति भाषायां प्रसिद्धम् ।
६ एतेन कामकन्दलायाः पद्मिनीत्वं सूचितम् ।
७ स्मृत्यलङ्कृतिः । ८ स्तनौ । ९ स्मृत्यलङ्कारः ।
१० अत्रैकस्याः कामकन्दलाया अनेकत्र वर्णनाद्विशेषालङ्कारः ।
११ परिणामालङ्कृतिः ।

**रत्नसेनः**--सा का ? ( श्रीपतिः सर्वमुदन्तं गदितवान् । रत्नसेनः श्रुत्वा तत्र गत्वा तत्प्रतिवेशिनमपृच्छत्[1] । )

( ततः प्रविशति प्रतिवेशी । )

**प्रतिवेशी**—सा ज्वरादिपीडितास्तीति श्रूयते ।

( रत्नसेनः श्रुत्वा भवनमागत्य वैद्यवेशं गृहीत्वा तद्गृहसन्निधाने वसतिं चकार। तत्परिजनैरपरदिने श्रुतं 'भिषगागत' इति स आनीतः । )

( ततः प्रविशत्यगदङ्कारभूमिको[2] रत्नसेनः ।

**रत्नसेनः**-( धमनिमवलोक्य )

हृदयं[3]जव्यथया[4] परिपीडितेयमिति मद्वचनं शृणुताऽऽदरात् ।
उपवनभ्रमणाद्[5] भविता सुखं स्वनिल[6]सेवनतोऽपि, न चान्यथा॥२५॥

( इति निष्क्रान्तो वेशं त्यक्त्वा नेपथ्ये । )

( तत्सखीजनस्तां शिबिकामारोप्य तत्र नयति स्म । तत्र लतोचितमण्डपे— )

विरहज्वरमोहयुक्तया गलदस्रोदकबिन्दुसिक्तया ।
दयितो हृदि चिन्त्यते तया ! शयनीये शयनं विनाऽऽस्यते[7]॥२६॥

अपि च—

वल्लीनिशान्ते[8] कृतजागरेयं पयोजपादैः[9] ललनाऽऽनिशान्तम्[10] ।
पयोज[11]पत्रव्यजनानिलैस्तैस्तापातिरेकं भजते वियुक्ता ॥ २७ ॥

तत्सखीषु काचिद् विदग्धसखी—( प्रविश्य )

गोपायसि कथं बाले ! वदने तव पाण्डिमा ।
पक्ष्मव्याप्ताश्रुबिन्द्वोघाद्विरहाग्निं वदत्यसौ[12] ॥ २८ ॥

( कामकन्दला सवाग्यमम् आस्त । तदवसरे मित्रसन्देशश्रवणानन्दितस्वान्तः श्रीपतिर्वासर[13]विरतावाक्रीड[14]क्रीडनमिषेणागात् । प्रविश्य भ्रमँल्लताच्छन्नमण्डपाग्रं जगाम ।

---

१ गृहसमीपवासिनमित्यर्थः । २ गृहीतवैद्यवेशः ।
३ मदन आधिर्वा । ४ व्यथा व्याधिर्व्यभिचारी भावः ।
५ 'श्रीपतिमपि तत्रैव प्रेषयिष्यामी'त्याशयेनेदमुक्तमिति भावः ।
६ शुद्धवायुः । ७ उपविश्यते स्थीयत इत्यर्थः । ८ लतागृहे ।
९ चन्द्रकिरणैः । १० उषःकालं यावत् । ११ कमलम् ।
१२ अत्रकथनस्य चेतनधर्मत्वादचेतनेऽप्यारोपात्समाधिर्नाम गुणः।
१३ सायम् । १४ उद्यानविहारव्याजेनेत्यर्थः ।

तौ परस्परं विलोक्य— )

चिरं विरहिणावुभौ प्रसितमानसौ दर्शने
परस्परमनङ्गमार्गणनिपीडितौ पश्यतः ।
तदा सपुलकोत्कराञ्चिततनूरुहा निर्भरं
विलोक्य समया सखीमभिनयत्यहो ! चित्तजम् ॥ २९ ॥

**सखी**—( ज्ञाततत्त्वा तूर्णमुत्थाय श्रीपतिं प्रति— )

शय्या पङ्कजनिर्मिता कुचतटे पाटीरपङ्कद्रवो
वारंवारमुदारशीतलजलैः सेकोऽपि धारागृहैः ।
तन्वङ्ग्यास्तनुविग्रहं दहति, तत्सोढुं न शक्ताधुना
दुःखार्ता, सुखदो भव प्रियतम ! त्वां नेतुमायाम्यहम् ॥ ३० ॥

**श्रीपतिः**—

तद्विरहानलदग्धो दर्शनपीयूषधारया सिक्तः ।
तत्सङ्गजीवनेन च बाले ! सुरतां च यामि सापि तथा ॥ ३१ ॥

( इत्युक्त्वा तया सहान्तर्गतः श्रीपतिः । वीक्ष्य सखीजनश्चलितः । तनूरुहमोदन-कम्पितप्रस्वेदमौक्तिकश्रेणीललिततनुतनूलतिका कामकन्दला तमपि तथाभूतम्— )

प्रेम्णाश्लिष्य तनूरुहाञ्चिततनुः सञ्चुम्ब्य वक्त्राम्बुजं
पीनोत्तुङ्गकुचद्वयेन निभृतं सम्पीड्य वक्षःस्थलम् ।
बाला प्रीतिरसातिरेकमुकुलीभूताक्षिपद्मद्वया
प्रेयांसं रसतृप्तिमार्पयति किं निःस्रस्तदेहाम्बरा ॥ ३२ ॥

अपि च—

विविधैसुरतश्रान्ताङ्गायाः सुपीनकुचोपरि
द्विगुणितरसप्रेमा कान्तो निधाय कपोलकम् ।

---

१ आसक्तचित्तौ । २ समीपे । ३ कृशाम् ।
४ स्वर्गसुखप्राप्तिरिहैवेति भावः । ५ रोमहर्ष इत्यर्थः ।
६ सात्त्विकभावातिशयादिति भावः ।
७ प्रापयतीत्यर्थः । प्रियतमं रसमग्नं कृत्वा सन्तोषयतीति भावः ।
८ नायकालम्बनः शृङ्गारः । ९ नायिकालम्बनोऽत्र शृङ्गारः ।

प्रथितजघनः सुप्तश्चाट्रून्वदन् मुहुरादरा-
दुदयशिखरे रक्त[1]: शोभां दधाति यथा[2] शशी ॥ ३३ ॥

( तदा गम्भीरसान्द्रस्नेहसिन्धुमज्जनसम्पादितशृङ्गार[3]मुक्ताफलमाला[4]कलितगलेव[5] पुञ्जितस्वेदबिन्दुसन्दोहराजिहारिण्यङ्गलतिका तदीयमनोहरतरतनुवल्लरीविलोकनपुनर्द्विगुणितस्मरतरतिः कान्तश्च । )

दीपे पाण्डुरतां वीक्ष्य वदनं श्लिष्टयोस्तयोः ।
वियोगशङ्कया तूर्णं तामेव रुचिमादधौ ॥ ३४ ॥

( तत उत्तुङ्गपूर्वगिरिवक्षो[6]रुहाऽऽरक्त[7]पौरन्दरीरक्त[8]पद्मिनीवल्लभे[9] प्रादुर्भूते श्रीपतिरुत्थाय तामाश्वास्य गृहं गतः । पुनरस्ताचलचूडचुम्बिवारुणी[10]रक्तचण्डांशौ तथा चलितः । तदा कश्चिद्राजचारोऽपि गतवांस्तत्र । तेनोभयोः स्नेहातिशयं वीक्ष्य क्रूरचित्तेन राज्ञे निवेदितम् । राज्ञा सामर्षं नगरतोऽपि निष्कासितः श्रीपतिः 'कदापि प्राप्स्यामि ताम्' इत्युक्त्वा गतः । कामकन्दला पुनः— )

गते प्रियतमेऽबला नववियोगदुःखार्दिता[11]
सखीजनपुरो भृशं वदति बाष्पपूर्णेक्षणा ।
मुहुर्व्यजनवीजनं कुरुत मा, ममोरोगतैः[12]
कुपीट[13]जनिरुज्ज्वलो भवति देहदाहाय वै ॥ ३५ ॥

( श्रीपतिः पुनर्द्विगुणिततद्विरहदहन[14]दग्धो नगरसीम्नि छ्ष्वाप । )

( इति निष्क्रान्ताः सर्वे । )

इति श्रीधर्माधिकारिकृष्णविरचिते कामकन्दलनाम्नि नाटके प्रथमोऽङ्कः ।

---

१ रक्तोऽनुरक्तः शोणश्च । २ उपमालङ्कृतिः । ३ रूपकम् । ४ अत्रापि रूपकम् । ५ उत्प्रेक्षा । ६ उषःकालाऽऽगमनात् । ७ रूपकम् । ८ प्राची । शोणाऽनुरक्ता च । ९ सूर्ये । १० सुरा प्रतीची च । मद्यपत्वं व्यभिचारित्वं च ध्वनितम् । ११ एतेनाङ्कुरिते विप्रलम्भे ईदृगवस्था, अग्रे किं भावीति व्यङ्ग्यम् । १२ वक्षोगतैः हृद्गत इत्यर्थः । १३ अग्निः । १४ रूपकम् ।

# द्वितीयोऽङ्कः ।

(ततः प्रविशतः परागकेसरनामधेयौ नर्तकौ । अभिनीय रुचिरनटनम्—)

**परागः**—भो वयस्य ! त्वं कमपि कामकन्दलाप्रियस्य श्रीपतेर्वृत्तान्तं जानासि ?

**केसरः**—शृणु । ततः प्रगे[1] श्रीपतिः—

मार्गेणाग्रे चचालाऽसौ प्रियाविरहदुःखितः ।
स्मरन् हृदि गतां बालां पान्थैः सह मुहुर्मुहुः ॥ १ ॥

किञ्चिद् दूरं गत्वा,

गङ्गाभङ्गपरम्पराञ्चिततटे पीठोपविष्टान् द्विजान्
भूत्या भूषितदेहकान्तिरुचिरान् वेदोक्तमन्त्रैर्मुहुः ।
दर्भाग्राम्बुकणौघसिक्तशिरसो ज्योतिः परं ध्यायतो
दृष्ट्वा मन्मथबाणजालविकलोऽध्वन्यः पुरः सर्पति ॥ २ ॥

**परागः**—सुमित्र ! म्लानमृणालैकोमलाङ्गवल्ली[2] विप्रलम्भजाताऽऽभीलैकृशा[3] कामकन्दला—

अधिदिनान्तरमम्बुजलोचनाऽप्यधिवनं[4] भ्रमति क्षुभिताम्बरा ।
वदति कुन्दतरुं कुसुमैर्मुहुर्हससि[5] किं गलितालकवल्लरीम् ॥ ३ ॥

**केसरः**—पुनरन्यतो गत्वा,

गुञ्जन्मत्तमिलिन्दसुन्दरसरोजन्मा[6]ऽलिलुभ्यच्चल-
द्धंसं शारदरात्रिनाथकिरणाभोऽम्भः सरः शोभते ।
तद् दृष्ट्वा मदनेषुभिन्नहृदयः कान्तामुखाब्जं स्मरन्
नानावृक्षलतानिकुञ्जभवने तिष्ठन् पुरो गच्छति ॥ ४ ॥

पुनरन्यतो गत्वा,

---

१ प्रातः ।  २ अत्र वाचकलुप्तोपमालङ्कारः ।
३ दुःखम् ।  ४ सप्तम्यर्थेऽव्ययीभावः ।
५ विरूपदर्शनेनेति भावः । तरूणां कुसुमविकासे तरुहास्यमिति कविसङ्केतः ।
६ भ्रमराः ।  ७ कमलपङ्क्तिः ।  ८ उपमा ।  ९ स्मृत्यलङ्कारः ।

त्रुटयद्दन्तकरोद्भवास्थिचिकुराकीर्णं श्मशानं मुहु-
र्नृत्यद्भूतवधूकपालनिनदं गोमायुगृध्रैर्युतम् ।
तीव्रप्रज्वलदग्निदग्धकुणपं सन्त्रासदं भीषणं
पश्यन् गच्छति निःश्वसन्मुहुरयं पान्थः प्रियादुःखितः ॥५॥

**परागः**—सखयः ! श्रीपतिवल्लभा तत्स्मृतिदारुप्रज्वलितविरहदहना कामकन्दला पुनः—

गलच्चिकुरधोरणी स्खलितभूषणाली च सा
निरङ्कविधुतुल्यमावहति चाननं पाण्डुरम् ।
दिनेशकिरणैर्यथा कुमुदिनी परिम्लायति
स्मराशुगगणैस्तथा विरहिणी परिग्लायति ॥ ६ ॥

**केसरः**—पुनरन्यतो गत्वा दूरतोऽवलोक्य पुरः पुरादागतं कम्प्रत्यूचे ।

( ततः प्रविशति नागरः । )

**श्रीपतिः**—( प्रविश्य )

पुरेऽस्मिन् ब्राह्मणागारमस्ति नागर ! वा न वा ।
मार्गश्रान्तोऽहमधुना क्षणं तिष्ठामि वासरे ॥ ७ ॥

**नागरः**—अहमेव द्विजो, मम गेहमागन्तव्यं भवता ।

( इति गृहं तं नयति स्म । नीत्वा संस्नाप्य भोजयित्वाऽऽस्तरणे उपवेश्य विरहपाण्डुरवदनकमलं वीक्ष्याऽपृच्छत्— )

आगतस्त्वं कुतो विप्र ! क्व गमिष्यसि चाधुना ।
किं नाम तेऽस्ति भो विद्वन् ! वियोगार्तो नु दृश्यसे ॥ ८ ॥

---

१ करादुद्भवो येषाम् । नखा इत्यर्थः ।

२ नृत्यन्तीनां भूतवधूनां कपालनिनदः कपालशब्दो यत्रेति बहुव्रीहिः श्मशानविशेषणमिदम् ।

३ शवः । ४ परिणामः । ५ उपमा ।

६ अत्र म्लायति ग्लायतीत्येकार्थस्यावृत्तेरर्थावृत्तिदीपकालङ्कारः ।

७ नगरवासित्वादेतत्परीक्षणम् ।

( श्रीपतिः सर्वं तदभिललाप । )

**नागरः**—

अवन्तीपुरि विप्रेन्द्र ! गच्छ त्वं, तेमनो रथान् ।

पूरयिष्यति धर्मात्मा विक्रमार्को महीपतिः ॥ ९ ॥

( श्रीपतिरेतन्निशम्य प्रातरुत्थाय तत्रैव चचाल । कियद् दूरं गत्वा— )

प्रचण्डचण्डांशुकरप्रतप्तो मध्याह्नदिष्टेऽन्धुसमीपभागे ।

वीक्ष्य प्रपापालककामिनीं नु प्रियानुरूपां हृदि विह्वलोऽभूत् ॥ १० ॥

तथा हि—

विरहाग्निहेतिदग्धस्तथैष चण्डांशुचण्डकरतप्तः ।

दयितातौल्यादियमपिहतमपि हन्तुं विनिर्मिता विधिना ॥ ११ ॥

**परागः**—मारमार्गणपाटितहृदयकपाटा कामकन्दला किल—

स्मरजदुःखसमाकुलमानसा दिवसमब्दसमं समजीगणत् ।

कृशतराङ्गलताङ्गुलिमुद्रिकां धृतवती च यथा करकङ्कणम् ॥ १२ ॥

**केसरः**—पुनरग्रे गत्वा विविधपालाशतरपलाशिपलाशपालाशीभूतेऽत्युच्चावचस्थले घोरझाङ्काररवपूरितप्रान्त उन्मत्तोत्तुङ्गमातङ्गसन्निभपाषाणगणमण्डित उच्चत्वचुम्बितचन्द्रबिम्बकूटकोटिविराजिते मृगभल्लखड्गिगजद्वीपिनागादिविविधचतुष्पदाश्रिते हंसशुकसारिकाकपोतमयूरटिट्टिभरथाङ्गसारसतित्तिरिखञ्जनचातकप्रभृतिविहगकोलाहलगुञ्जिते दीर्घतरगह्वरनिर्झरसरित्सरोवरगम्भीरनीरवापीकूपोपशोभिते गिरिवरेयं पुरः सर्पति ।

**परागः**—विप्रलम्भपीडितदेहवल्लरी कामकन्दला च मनसीत्थं चिन्तयति स्म—

सुमनोधन्वा भिल्लो मम तनुवातींयुमुत्सुको हन्तुम् ।

पृष्ठे लग्नः प्रियतमसमागमदरीं कदा प्रयास्यामि ॥ १३ ॥

---

१ कूपः । २ पानीयशाला । ३ सादृश्यात् । ४ हरितः । ५ वृक्षः । ६ पत्रम् । ७ उपमा । ८ अयोगे योगकल्पनात्सम्बन्धातिशयोक्तिः । ९ विन्ध्यपर्वते । १० काम इत्यर्थः । ११ मृगः ।

१२ व्याधानुसरणत्रस्तस्य मृगस्य गिरिगुहेव मे प्रियसमागम एव जीवनोपाय इत्याशयः । अत्र च समस्तवस्तुविषयं साङ्गं रूपकमलङ्कारः ।

**केसरः**--वयस्य ! पुनः पुरो गत्वा विविधाऽऽमी[1]लसहिष्णुः कियद्दिनानन्तरं बृहत्कपाटविष्कम्भशृङ्खलोपशोभितचतुर्द्वारराजितां गम्भीरतरसरित्सरोदीर्घिकाकूपजीवनजीवितपतत्रिसंहतिकलकलकूजितबाह्यमार्गामन्तश्चञ्चच्चन्द्रप्रस्तरराजिराजिताऽजि[2]रां विविधविपणिप्रसारितसरससकललोकमनोमीनाकृष्टिकरनानावस्तुभूषितामुत्तुङ्गतागर्वखर्वी[3]कृतेन्दुमण्डलप्रतिसदनशशिशा[4]लाशृङ्गामनेकरागरञ्जितमारुतोद्धूतके[5]तनविलसितनागरिकाऽगारश्रेणीशोभिताऽयना[6]मवन्तीनगरीं प्राप । तदपरघ[7]स्रे 'नित्यं श्रीमहाकालेशदर्शनायागच्छति महीपति'रिति तत्रैव निवासं कृतवानयम् । तत्र शिवमन्दिरद्वारि पद्यमेकं विलिख्य स्वयं गुप्तः स्थितः । तद्यथा--

राजन् ! गुरुतो धर्मः प्राप्तो ह्यर्थस्तथाऽन्यभूपालात् ।
कामं त्वत्तो याचे हीनैतेन त्रिवर्गसम्पत्तिः ॥ १४ ॥

(ततः प्रविशति सानुचरो विक्रमादित्यः। यस्य प्रभावो वैरिवारारो[8]हानयनसलिलकु[9]ल्याकलितवनकुलावलोकनेन न्दावनसन्दोहसन्देहकृत् स भासते साहसाङ्कः । )

**विक्रमादित्यः**--( प्रगे महाकालेश्वरदर्शनायागत्य तद्[10] विलोक्य स्वदूतान्प्रति— )

इदं पद्यं कृतं केन कोऽस्तीहस्थो हि वा न वा ।
अन्विष्यतां तूर्णमयं स[11]द आनीयतां ध्रुवम् ॥ १५ ॥

( इत्युक्त्वा निलयं जगाम । दूतैः प्रान्विष्यानीतः सदः )

**श्रीपतिः**--( प्रविश्य राजप्रणमितचरण आशीर्वचनं नाटयति— )

सङ्ग्रामाङ्गणमागतेऽमररिपौ शुम्भे जगद्रा[12]वणे
हस्ते च[13]र्मकृपा[14]णधारिणि बलैरावेष्टिते सर्वतः ।

---

१ 'स्यात्कष्टं कृच्छ्रमाभीलम्' इत्यमरः ।
२ 'अङ्गणं चत्वराऽजिरे' इत्यमरः ।
३ सम्बन्धातिशयोक्तिः । ४ चन्द्रशाला, शिरोगृहमित्यर्थः ।
५ ध्वजम् । ६ मार्गः । ७ दिने । ८ कान्ता ।
९ 'कुल्याऽल्पा कृत्रिमा सरित्' इत्यमरः । १० पद्यमित्यर्थः ।
११ राजसभाम् । १२ जगत् रावयति आक्रोशयति सः, तथाभूते ।
१३ ढाल इति प्रसिद्धम् । १४ खड्गम् ।

युद्धोत्सा[1]हमुदा यया झटिति संन्यस्तः शरः कार्मुके
तस्याः पातकसङ्घदारणकरं पादाम्बुजं वोऽवतात् ॥ १६ ॥

अपि च—

राजंस्त्वद्यशसां चयः प्रसरतु ब्रह्माण्डभाण्डे सदा
नीते पाण्डुरतां, प्रियानपि रमा भूभृत्सुता रेवती ।
वैकुण्ठा[2]ऽसितकण्ठनीलवसनान्नो यान्ति येन भ्रमात्
त्वद्धा[3]टीश्रवणद्रवैद्रि[4]पुवधूनेत्राम्बुपूरो यथा ॥ १७ ॥

ततश्चञ्चत्प्रभाभासुरविविधरागरञ्जितमणिगणमण्डितसभान्तरगतस्फुरत्तेजोमयवज्रमौक्तिकराजिविराजितभद्रासनोपविष्टः श्रीविक्रमादित्यो भट्टारकः—

कुतो भवानागत ईदृशी तेऽवस्था गमिष्यत्यधुनेति कुत्र ।
त्वं कोऽसि शीघ्रं वद तेऽभिलाषः कोऽस्तीति राजा निजगाद विप्रम् १८

श्रीपतिः—

यशो निशम्याशु तवालयेऽहं यातो विमोक्तुं निजदुःखभारम् ।
अतो विवि[5]क्ते व्रज राजराज ! जनाग्रतो वक्तुमशक्यमेतत् ॥ १९॥

( भट्टारको रहसि नीत्वाऽपृच्छत् । श्रीपतिः सर्वं सम्यगवा[6]दीत् । )

भट्टारकः—

स्वस्थो भव त्वं विप्रेन्द्र ! करिष्ये प्रथमं तव ।
का[7]र्यं, पश्चात्स्वकं राज्यं द्रक्ष्यामीत्यवधारय ॥ २० ॥

( एतन्निवेद्य सभामागतः । सदोगतो भट्टारकोऽमात्यादीन्प्रति पश्यति स्म । )

अमात्यः—( प्रविश्य )

स्फुरत्प्रतापतपनः कीर्त्या चन्द्रो मही[8]पतिः ।
को नियोगोऽथ कर्तव्य आज्ञापयतु सादरम् ॥ २१ ॥

भट्टारकः—प्रकामार्या कामसेनाभिधं राजानं प्रति सन्देशहरः प्रेषयितव्यः—भावत्की कामकन्दला वारवधूरत्र प्रेषयितव्याथवाऽनीकं कर्तव्यमिति ।

---

१ वीररसः । २ विष्णुमहेशबलरामानित्यर्थः ।
३ युद्धयात्रा । ४ पलायमानेत्यर्थः । ५ एकान्ते ।
६ वद्लुगन्ताद् वद्धातोर्लुङि रूपम् । ७ रूपकमुल्लेखश्च । ८ युद्धम् ।

( अमात्यो झटिति[1] तमाहूय प्रेषितवान् । दूतस्तूर्णं तत्र गत्वा द्वारपालदत्तप्रवेशः सभां प्राविशत् । )

**दूतः**--(यथावत् प्रणम्य) श्रीमन्महाराजराज ! श्रीराजाधिराजवरिष्ठ-शत्रुविमर्दनशीलविक्रमादित्यप्रेषितोऽहम् । इदं पत्रं ग्राह्यम्, अस्योत्तर-वितरणं तूर्णमेवं[2] ।

**कामसेनः**--( पत्रं विलोक्य सामर्षं मन्त्रिणं प्रति ) दूतं प्रत्युत्तरम्[3]--विक्रमार्केण सह तुमुलमेव करिष्यामि न तां[4]मिति ददस्व ।

**मन्त्री**--दूत ! त्वं गच्छ राज्ञे विनिवेदय--न तां प्रेषयन्ति युद्धाय समुपस्थिताः ।

( दूतः सन्देशं गृहीत्वा पुरमागत्य भट्टारकायोक्तवान् । )

**परागः**--वयस्य ! प्रियतमराहित्यकृच्छ्र[5]शातं[6]काययष्टिः कामकन्दला सखीं प्रति बभाषे--

यातः स्वप्ने निशायां शयनतलगतां मां हठाद्दोर्लताभ्या-
मालिङ्ग्य प्राणनाथश्चटुतरवचसाऽवोचदेतच्छृणु त्वम् ।
तद्वक्त्राब्जे स्वकीयं वदनमथ निधायाशु चुम्बामि यावत्
प्रेम्णा तावद्वयस्ये ! बत शठविधिना नष्टनिद्रा कृताऽहम् ॥२२॥

चिरव्यथितबालाया विप्रलम्भावस्था कियदभिनेतव्येत्यलम् ।

( इति निष्क्रान्तः । )

( केसरो वीररसाधिष्ठितः[7] । )

**भट्टारकः**--( मन्त्रिणं प्रति ) धाटी[8]सामग्री कार्या ।

**मन्त्री**--( वाहिनीपतिमाहूय[9] ) चतुरङ्गानीकं[10] सज्जीकुरु ।

( सेनानीस्तूर्णमागत्य निषादि[11]सादि[12]पदाती[13]न् सज्जीचकार । कृत्वा श्वस्तन एव यानं भवितेति विज्ञाय पूर्वं प्रभुं बलं[14] दर्शयितुं स्तम्बेरमादि[15]सैनिकान्नोदयामास । )

आदौ **करिसेनानीरागतः** । तोरणाग्रतः[16]--

---

१ द्रुतम् । २ शीघ्रमेव । कार्यमिति शेषः ।
३ ददस्वेत्यत्रान्वयः । ४ प्रेषयामीति शेषः । ५ दुःखम् ।
६ कृशा । ७ अभूदिति शेषः । ८ युद्धयात्रा ।
९ सेनापतिम् । १० हस्त्यश्वरथपादातमिति चत्वारि सेनाङ्गानि ।
११ हस्त्यारोहाः । १२ अश्वारोहाः । १३ पदातयः ।
१४ सैन्यम् । १५ गजादिसेनारक्षकान् । १६ बहिर्द्वारम् ।

शुण्डादण्डप्रघूर्णश्रवणरिपुसमक्रूरनादप्रचण्ड-
प्रोद्दामोच्छृङ्खलौघाः प्रतिभटहृदयद्रावकाः पर्वताभाः ।
चीत्कारक्षोभिताशा मदसुरभिलुठन्मत्तगुञ्जन्मिलिन्दा
आन्दोलालोलकर्णा मदकलकरिणां राजयः प्रस्फुरन्ति ॥२३॥

ततः **सादिसेनानीः**--

हेषात्रासितशत्रवश्चपलतागर्वेण खर्वीकृत-
स्त्रीनेत्राः खुरकुट्टनेन नितरां क्षोदीकृतक्ष्मातलाः ।
स्फूर्जद्घ्राणचलं निगा[1]ललुलितश्यामालकाः किङ्किणी-
झाङ्कारध्वनिगुञ्जिताश्चतुरगाः काम्बोज[2]का भान्त्यमी ॥ २४ ॥

ततः **पदातिसेनानीः**--

कियन्तो धानुष्काः फल[3]कविधुहा[4]सप्रगुरवः
परे योधाः कुन्त[5]क्षपितरिपुदेहा मदकलाः ।
तथोद्यन्नादा[6]स्त्रा वरुणत[7]नयापानरचिता-
ऽरुणाक्षास्ते शूराः कवचकलिता भान्ति पदगाः ॥ २५ ॥

ततो **रथिसेनानीः**--

उद्दामो[8]द्दामचञ्चद्रथत[9]नुदलितक्ष्मातलास्तुङ्गवाहा
वेगप्रोद्भूतनादक्षुभितरिपुजनाः स्यन्दना भान्ति भाभिः ।
केतुक्षिप्ताऽभ्रसम्धारणसकलकलाकोविदानां भटानां
जेतॄणां क्षुद्रघण्टारवचकितसुरागारवीराः पुरस्तात् ॥ २६ ॥

(मश्रीपती राजा एवं सकलं स्वचक्रं वीक्ष्य सचिवान्तरं संस्थाप्य यात्रायै प्रस्थितवान् ।)

( इति निष्क्रान्ताः सर्वे । )

**इति श्रीधर्माधिकारिकृष्णविरचिते कामकन्दलनाम्नि नाटके द्वितीयोऽङ्कः ।**

---

१ गलोद्देशः । २ काम्बोजदेशोद्भवा उत्तमजातीया इत्यर्थः ।
३ ढाल इति प्रसिद्धम् । ४ खड्गः ।
५ प्राससंज्ञक आयुधविशेषः, भाला इति प्रसिद्धः ।
६ बन्दूक इति प्रसिद्धम् । ७ वारुणी सुरा ।
८ भृशार्थे द्वित्वम् । ९ रथाङ्गं चक्रम् ।

# तृतीयोऽङ्कः ।

( ततः प्रविशति नटद्वयम् )

**प्रथमः**—श्रीविक्रमादित्यमहाराजो विजययात्रायै प्रस्थितवानिति श्रूयते । तत्र किं वृत्तम् ?

**द्वितीयः**—ततः प्रातर्विविधमङ्गलतूर्यनादसंरम्भे सति साहसाङ्को गृहाद् बहिरभूत् । तदानीं हि—

जयाय चलिते भूपे प्राची रागारुणाम्बरा ।
सौरं बिम्बं समादाय स्थिता नीराजनाय किम् ॥ १ ॥

पदान्तराणि गते सति—

पश्यन्ति पौराः पवनायनेषु स्थित्वा सहर्षं कुतुकेन सेनाम् ।
मत्ता गजा लोलहयाः स्फुरन्तो रथा भटा उद्धृतशस्त्रसङ्घाः ॥ २ ॥

नगरतो बहिर्भूतं दृष्ट्वा—

वाहौघोत्खुरकुट्टनोद्धतरणच्चक्रभ्रमाऽऽचूर्णित-
क्षित्युड्डीनरजः सुरैः सचकितं ध्वान्तीकृताऽऽकाशकम् ।
दृष्ट्वा दुन्दुभिनादभीतवनितावृन्दं भुजाभ्यामुरो-
लग्नं व्यग्रमनोभिरद्भुतमिदं प्राश्वासितं निर्गमे ॥ ३ ॥

**प्रथमः**—ततस्ततः ?

**द्वितीयः**—एवं चलन् स प्रकामासमया गत्वा गव्यूतियुगदूरे रणध्वजं स्थापयित्वा लेख्यार्थसंवाहकं प्रेषयामास । दूतस्तत्र गत्वा प्रतीहारदत्तप्रवेशो भूपं ददर्श । यथावत्प्रणम्य च प्रोवाच—'प्रचण्डकुण्डलितहिण्डितगजशुण्डमाण्डितभुजदण्डकुण्डलितचण्डकोदण्डोड्डीनबाणताण्डवखण्डितभटमण्डलः श्रीविक्रमादित्यस्त्वत्पत्तननिकटवर्ती

---

१ वाद्यम । २ विक्रमादित्यः । ३ सिद्धविषया हेतूत्प्रेक्षा ।
४ वातायनेषु गवाक्षेष्वित्यर्थः । ५ गर्जत् । ६ यात्रायाम् ।
७ समीपे । ८ क्रोशयुगम । ९ दूतम् । १० द्वारपालः ।
११ कुण्डलं कुण्डलाकारं सञ्जातं यस्येत्यर्थः । 'तदस्य सञ्जात'-मितीतच् ।

युद्धायोपस्थितः । त्वमपि तत्सामग्रीं तूर्णं कुरु । राजा चाविंति स्वीकृत्य मन्त्रिणं प्रति[1] । दूतश्चलितः । इहागत्य भट्टारकाय निवेदितवान् ।

( ततः प्रविशतः श्रीसाहसाङ्को मन्त्री च । )

**मन्त्री**—आज्ञापयतु भूपालः ।

**राजा**—चतुःप्रतीकमनीकं[2] सज्जीकुरु ।

( इति निष्क्रान्तो मन्त्रिणा सह । )

**प्रथमः**—ततः किं वृत्तम् ?

**द्वितीयः**—सज्जीकृत्य च सेनां मन्त्री राजानं व्यजिज्ञपत् । राजा सचिवान्तरं[3] सबलं युद्धाय प्रेषितवान् । आगतस्तुमुलचत्वरं[4] सः । उभयोर्दुन्दुभिनादो जातः । भटकटकं[5] बद्धम् । अथ कश्चित्परस्परं बृहच्छृङ्खलाघूर्णनताडनोद्दण्डदन्ताघातोत्तुङ्गगण्डस्थलोद्धताघातचीत्काररवशुण्डादण्डप्रथनयुध्यमानगजारोहास्तथा स्फूर्जद्धेषा[6]घोषणाभिमखुरखरै[7]स्ताडनचरमचरणपातावेगवर्यन[8]ललिताश्वारोहास्तथा वङ्गाङ्गलाटचोलहूण[9]प्रभृतिवारुण्यरुणलोचनाः पदातयस्तथा किङ्किणी[10]नादपूरिताकाशोत्तुङ्गवाहवहनाऽपस्करै[11]रवगर्जत्खरखरक्षकाद्युपशोभितस्यन्दनारोहाः कवचिनोऽन्ये भटाश्च खड्गधनुर्भल्लशक्ति[12]शूलपट्टीश[13]मुद्गरपरश्वधा[14]दिविविधशस्त्रप्रहारैर्युयुधिरे ।

वाहिनीनाथ[15]कीलालं[16] पातुं खड्गघनाघनाः[17] ।
धनुराराबनिर्घोषा बाणपुङ्खतडिद्युताः[18] ॥ ४ ॥

भल्लैश्छिन्नाः कियन्तो हयखुरदलिताः केऽपि बाणौघभिन्नाः
केचिद्दन्तीन्द्रशुण्डाधृतपदकमला रक्तरक्ताम्बराश्च ।

---

१ पश्यति स्मेति शेषः । २ चतुरङ्गं सैन्यम् ।
३ द्वितीयं मन्त्रिणमित्यर्थः । ४ युद्धाङ्गणम् । ५ सेना ।
६ हेषा अश्वशब्दः । ७ तीक्ष्णम् । ८ गमनम् ।
९ म्लेच्छजातिविशेषाः । १० क्षुद्रघण्टाः । ११ चक्रम् ।
१२ बर्छी इति ख्यातम् । १३ आयुधविशेषः पटा इति प्रसिद्धः ।
१४ परशुः । १५ सेनापतिः समुद्रश्च । १६ रक्तं जलं च ।
१७ वर्षुकाब्दाः । १८ रूपकालङ्कारः ।

घूर्यन्ते[1] ते तथापि प्रबलभुजैलताकाण्डकण्डूयनेन[2]
प्रोद्भूतोद्दामवीर्या रणभुवि सुभटाः पानशोणायताक्षाः ॥५॥

**प्रथमः**—ततस्ततः ?

**द्वितीयः**-तदानीं श्रीविक्रमार्कस्य प्रोद्भटभटसन्ताडितकामसेनभूपाऽनीकिनीनाथा[3] गजहयरथारोहा मदोद्धतयोद्धारश्च सर्वे पलायिताः।

केचिद्विशन्ति भयतो गिरिगह्वराणि
त्यक्त्वायुधानि नृपतेः शरणं च केऽपि।
अन्ये भटा विविधवेशधराः प्रकामं
भिक्षार्थमद्भुततरा विचलन्ति चित्रम् ॥ ६ ॥

वीक्ष्य भट्टारकस्तान् अत्युद्धतपराक्रमशालिमहाबलभटान्सङ्गृह्य स्यन्दनमारुह्य प्रकामानगरं शनैः शनैरुपाजगाम। श्रुत्वैतत्कामसेनः पलायितबलो भीत्या पुष्पस्रग्बद्धहस्तो विक्रमरवेः पुरस्तादाजगाम।

( ततः प्रविशति विक्रमादित्यो राजा यथानिर्दिष्टः कामसेनश्च। )

**भट्टारकः**--( वीक्ष्य सामर्षम्[4] )

कामसेन ! मया सार्कं क्षुद्रसेनाऽतिगर्वतः।
युद्धायोपस्थितोऽज्ञातविक्रमादित्यविक्रमः[5] ॥ ७ ॥

**कामसेनः**--राजेन्द्र ! महानपराधः कृतो मया। यतः पूर्वमेवाऽहङ्कारतो न प्रेषिता कामकन्दला। अतोऽहं क्षन्तव्यः।

( भट्टारकः सप्रसादं झटिति तं[6] स्वस्यन्दने सङ्गृह्य रणाजिरं[7] दर्शयति स्म। )

छिन्नप्रोद्दण्डवक्षःपदकराशिरसो व्याकुलाः शस्त्रपातै-
र्योधाः कीलालनद्युद्भवबहलतरोत्तुङ्गभङ्गौघरक्ताः[8]।
शोभन्ते युद्धभूमौ पिबति किल तथाऽसृक्च[10] नक्तञ्चरौघो
योगिन्यः सञ्चरन्त्यो मृगकितवगणा[11] वीरवीर्यं नुवन्ति[12] ॥ ८ ॥

---

१ 'घूरी हिंसाया'मिति धातुः। मार्यन्त इत्यर्थः। २ रूपकम्। ३ सेनापतयः। ४ सक्रोधम्। ५ पराक्रमः। ६ कामसेनम्। ७ युद्धाङ्गणम्। ८ अत्र बीभत्सरसः। ९ तद्गुणालङ्कारः। १० रुधिरम्। ११ मृगधूर्ता गोमायवः। १२ स्तुवन्ति।

अपि च--

श्रीमद्भट्टारकस्य प्रखरतरलसत्तेजऔर्वाग्नियुक्ते
निर्नीमाश्वोप्रनक्रे सभटरथचयद्वीपवृन्दे गभीरे ।
सेनाकीलालसिन्धौ गजकुणपबृहत्पोतसंलग्नभङ्ग-
स्तम्भासक्तारिहस्तध्वजमिव चरितं दृश्यते युद्धभूमौ ॥ ९ ॥

( एतादृक्समराजिरं दर्शयित्वा स्वस्थले प्रणीयोपवेशयामास । उपविष्टं तं प्रति--)

**भट्टारकः**--

श्रीपतिर्भूसुरश्रेष्ठो विद्याऽकूपारपारगः ।
यातस्ते राजधानीं स कुतो निष्कासितस्त्वया ॥ १० ॥

**कामसेनः**--

मत्पुरो वारारामायै किञ्चिद्ये भूषणादिकम् ।
तेन श्रीपतिना गर्वात् किं दृष्ट्वा दत्तमर्थिना ॥ ११ ॥
अहं दातुमशक्तः किं, तस्यामासक्तचेतसा ।
यदर्पितमतो देशाद् बहिर्निष्कासितो मया ॥ १२ ॥

**भट्टारकः**--तेन तस्यै किं ज्ञात्वा दत्तं, तदज्ञात्वा त्वयाऽमर्षेण निष्कासितः ।

**कामसेनः**--किं विज्ञाय ?

**भट्टारकः**--वदनसुरभिलोभभ्रमद्भ्रमरदष्टचूचुकायाः सकलकलेवररुद्धसमीरदूरीकृताया एतच्चातुर्यं विज्ञाय ।

( कामसेनः सलज्जो निरुत्तरः । )

**भट्टारकः**--ज्ञातं नैतत्तत्र सदसि केनापि ।

**कामसेनः**--

ज्ञात्वा गुणगणमस्या दत्तं सम्यक् कृतं तेन ।
तस्यामासक्तोऽभूदनुचितमेतत्कथं तस्य ॥ १३ ॥

---

१ बीभत्सरसः । २ वडवाग्निः । ३ मृतः । ४ मकरः ।
५ शवः । ६ जहाज इति भाषायां प्रसिद्धम् ।
७ अत्र पद्ये रूपकमुत्प्रेक्षा च । ८ समुद्रः ।
९ 'चूचुकं तु कुचाग्रं स्यात्' इत्यमरः । १० अभूदिति शेषः ।

**भट्टारकः**--सौन्दर्यदर्पखर्वीकृतोर्वशीगर्वा गीतनीचीकृताटवीप्रियाङ्गना लास्यलज्जितरम्भोत्कृष्टगुणगणवती कटाक्षपातैः कस्य मनो नाकर्षति।

( कामसेनः साध्विति स्वीकृत्य तदाज्ञां प्राप्य निजागारं जगाम । भट्टारकश्च यथाऽयमासक्तस्तथा साऽपि नवेति विज्ञातुं सावहित्थो भूत्वा विविधचारुतरमनोहरवस्तुविक्रयणव्याजेन तद्गृहं गत्वा विरहाऽऽभोलकृशाङ्गीं दयितस्मरणप्रसितां तां वीक्ष्य ज्ञाततत्त्वः पुना राड्मागत्य श्रीपतिं नगरं प्रेषितवान् । श्रीपतिस्तूर्णं तत्रागत्य रत्नसेनालयं ययौ । मिलित्वोभौ परस्परमालिङ्ग्य कुशलवृत्तं कथयामासतुः । )

**रत्नसेनः**—(प्रविश्य) वयस्य ! दुःखाम्भोधिस्थचिन्तौर्वदग्धं मामविज्ञाप्य क्व गतस्त्वं किमिति ? तत्कथय ।

**श्रीपतिः**--(प्रविश्य) भो मित्र ! किं वक्तव्यम् । बहूनि दुःखानि भुक्तानि मदर्थमेव श्रीविक्रमसूर्येण । 'कामसेनेन सहाऽनीकं कृत'मित्यादि सर्वं वृत्तमजागदीत् । मत्प्रियायाः कुशलवृत्तान्तं तूर्णं निवेदय ।

**रत्नसेनः**—तत्कुशलं त्वद्विरहेण जीवितमात्रशेषमिति ।

( श्रीपतिः श्रुत्वा मूर्छां प्राप । रत्नसेनो झटिति तं प्रकृतिस्थं कृत्वा स्वस्थो भवेत्युक्त्वा निष्क्रान्तः। श्रीपतिर्धैर्यमवष्टभ्य स्नात्वा भोजनादिकं विधाय चारुवसनालङ्कारान्परिधाय कामकन्दलागृहं जगाम । तत्परिजनो यान्तं श्रीपतिमवलोक्य तां निवेदयामास । )

**कामकन्दला**–( श्रुत्वाऽऽशूत्थाय, प्रविश्य )

कथमागतोऽसि कान्त ! त्वं, किं जातं सविस्तरं वृत्तम् ।
क्व गतोऽभूरिति शीघ्रं वद खलु, तुष्टो नरेशः किम् ॥ १४ ॥

( इत्युक्त्वा )

विरहविधुररामा प्राणनाथं निगद्य
प्रसभमथ भुजाभ्यामङ्कपालीं चकार ।

---

१ हस्वीकृतः, नाशित इत्यर्थः । २ वनप्रियप्रिया कोकिलेत्यर्थः । ३ आकारगोपनम् अवहित्था, तया सहितो भूत्वा । आकारगुप्तिं कृत्वेत्यर्थः । ४ तत्पराम् । ५ 'ढ्रलोप' इति दीर्घः । ६ 'और्वस्तु वाडवो वडवानलः' इत्यमरः । रूपकमत्र । ७ पुनः पुनरगादीत्यर्थः । ८ धृत्वेत्यर्थः । ९ आलिङ्गनम् ।

दयितसकलवृत्तं नो रसात्किञ्चिदूचे

प्रियतम इति रागं वीक्ष्य तामालिलिङ्ग ॥ १९ ॥

अपि च--

चिरं बाढाश्लेषप्रकटतररोमाञ्चिततनू

रसाऽऽलोलाक्षीयं प्रियवदनचन्द्रं सुखकरम् ।

चिरं वीक्ष्य प्रेम्णा वदति दयितं-त्वत् किल विना

स्वसाम्यं मां नेतुं कुसुमधनुषा सूद्यतेभूत् ॥ १६ ॥

( श्रीपतिः पुनरालिङ्ग्य सञ्चुम्ब्य सर्वमाद्योपान्तं निगदितवान् । )

कामकन्दला-( सहर्षम् )

भोः प्राणनाथ ! खलु शत्रुगृहे निवासो

नो चारु विद्यत इति प्रवदन्ति सन्तः ।

कुक्षाऽहिरन्ध्रेसमया वसतिर्जनानां

नाशाय किन्न भवति स्म कदापि काले ॥ १७ ॥

अतो भट्टारकस्यैव नगरं गन्तव्यमेव ।

**श्रीपतिः**—एतदेव भट्टारकेण समं विचार्यायातोऽहम् । स्वस्था भव, श्वस्तन एव यानं भविता ।

( इति निगद्य यथेप्सितं विहितविहारो रत्नसेनागारं गत्वा तमपीदं निवेद्य पुनर्विक्रमादित्यस्य सद्मागजगाम । )

**प्रथमः** ( नटः )-श्रूयते किल कामकन्दलागृहाद्विक्रमादित्यस्य राष्ट्रं गतः श्रीपतिः । तत्र गत्वा तेन पुनः किं कृतम् ? जानासि चेत्कथय ।

**द्वितीयः** ( नटः )-तत्र गत्वा तमपि सर्वं कथितवान् सः । पुनरपरवासरे सचिवान्तरं सङ्गृह्यायुधजीविभिः साकं तस्या निकाय्यं गत्वा तां प्रगृह्य कामसेनं निवेद्य स्वस्थानमानीतवान् । भट्टारकः स्वपत्तनं चचाल । चलन्प्रविष्टः । तदानीं पौरा ऊचुः—

यदीयभुजदारितप्रबलशत्रुभूपाङ्गना-

सुलोचनविनिर्गताऽविरतवारिधाराभरः ।

---

१ अतनुत्वम् । एतेन दशम्यवस्था सूच्यते । २ उद्यमः कृतः ।
३ अत्र विशेषस्य सामान्येनोक्त्या अर्थान्तरन्यासालङ्कारः ।
४ सर्पबिलसमीपे । ५ राज्ञो विक्रमादित्यस्येत्यर्थः ।
६ योधैः । ७ गृहम् । ८ स्वदेशमित्यर्थः ।

निपत्य कुचपर्वते सुरनदीच्छविप्रो यशो-
मरालपतिमूर्मिभिः सुरमयत्यहो ! याति सः ॥ १८ ॥

अपि च—

काश्चिद्वातायनस्था विजितरिपुबलं भूपतिं पुष्पवर्षै-
र्वर्षन्त्यग्रे च काश्चिन्नरपतितिलकं चारु नीराजयन्ति ।
काश्चिल्लाजान् क्षिपन्ति प्रतिपदमपराः कीर्तिमुत्कीर्तयन्ति
प्रेक्षन्तेऽन्याश्च रामाः प्रतिसदनमहो ! विक्रमादित्यवीरम् ॥ १९ ॥

व्रजन् गृहद्वारमाजगाम ।

**प्रथमः**—ततस्ततः ?

**द्वितीयः**—तदनन्तरं चञ्चत्तडिदाभमणिदेदीप्यमानप्रासादद्वाःस्तो विविधमङ्गलपूर्णकलशशर्यकमलाः काश्चिद्धूपधूमचूर्णरचितडमरुसहशनीराजनमार्गणशाखजलजाः काश्चिद्विपञ्चीसप्तस्वरगीयमानाविविधरागमनोहरास्तथा बहिर्नानाविधमङ्गलगायकमागधस्तुतिपाठकाश्चान्ये वादित्रैर्महोदयं मन्यन्ते यस्य, स साहसाङ्कः श्रीपतिना सह सहर्षपुलकोऽन्तश्चचाल । अधिसदोऽपरामात्यमाहूय 'मम सुहृत्तरं श्रीपतिपण्डितं मदुत्तरदेशस्थविच्छन्दकं ददस्वे'त्युक्त्वा सूत्तमतमवासोऽलङ्कारैः सत्कृत्य वाडवहास्तिकरथौघगन्त्रीप्रेङ्खाशिबिकादि सर्वं दत्त्वा साष्टाङ्गप्रणमितमस्तकं भट्टारकं 'राजराज ! त्वद्यशोवल्लीपल्लवः कुसुमं धरतु, भूपभूप ! त्वदातङ्कदीपस्त्रैलोक्यमुज्ज्वलयतु, देवदेव ! कम्पितरत्नसानुदानवारिपारावारकल्लोलराजिर्विलसतु ते' इत्यादिदत्ताशीःश्रेणिः सचिवेन सह तत्राजगाम । भट्टारकस्तामपि तथा

---

१ रूपकम् । २ इहोपमालङ्कारः । ३ हंसः ।
४ नीराजनामारार्तिकं कुर्वन्तीत्यर्थः । ५ वर्णयन्ति ।
६ सदनं सदनं प्रतीति वीप्सार्थेऽव्ययीभावः । गृहे गृहे इत्यर्थः ।
७ द्वाद्वारम्, तस्मात्तसिल् । ८ हस्तः ।
९ मार्गणशब्देन पञ्चसंख्या ग्राह्या । पञ्चसंख्याकाः शाखा यस्येति पञ्चशाखो हस्त इत्यर्थः । १० सप्तभिस्तन्त्रीभिः परिवादिनी वीणा ।
११ सभायाम् । १२ राजगृहम् । १३ वाजिसमूहः । १४ गजसमूहः ।
१५ गाडी इति प्रसिद्धा । १६ डोला इति प्रसिद्धा ।
१७ पालखी इति प्रसिद्धा । १८ राजानं कामसेनमिति यावत् ।
१९ परिणामः । २० रूपकम् । २१ सुरालयो मेरुः ।
२२ अद्भुतौदार्यवर्णनादत्युक्तिरलङ्कारः ।

सत्कृत्य प्रेषितवान् । प्राप्तावुभौ विधुसदनं[1] गत्वान्दोलनपीठ उपविशतः ।

सान्द्र[2]स्नेहसुयान[3]मौञ्जनसमारूढौ प्रहर्षोदधा-
वौत्सुक्योद्धतवायुवेगचलितौ भोगौघहीरा[4]करे ।
[5]तानादातुमनुत्तमाँस्तरुणतामूल्यादिविक्रे[6]तृतो
यातावाप्तमनोरथौ प्रियतमौ, मन्ये निसर्गो[7] नवः ॥ २० ॥

**प्रथमः**—जगदुद्दण्डभुजदण्डाघातक्षपितरिपुबलललनालोचनसलिल-
निधिजनियशश्चन्द्रप्रसृताकिरणनीतश्वेतीभावे[8]विक्रमरविप्रसादलब्धबहुविध-
विलासयोरुभयोः षड्ऋतूत्सवलीलां[9] संद्रष्टुमिच्छामि । सखे ! तावदभिनय ।

**द्वितीयः**—अथ सुमनो[10]ऽनेहसि,

उड्डीनोड्डीनविष्टा[11]तकनिचयकृतध्वान्त एणीमदा[12]ढ्य-
प्रासाराऽऽगा[13]रमुक्तारुणसलिलभरासिक्तदेशे निवासे ।
उद्दामोद्दामवीणा[14]धनपण[15]वरवाऽऽगुञ्जिते मत्तरामा-
वृन्दैः सार्धं प्रसूनाभरणविलसिता ह्यद्भुतं दीव्यति स्म ॥२१॥

तदनु ग्रीष्मसमये—

बालाऽच्छपाटीर[16]रसार्द्रदेहा धारागृहाऽऽमुक्ततुषारसिक्ता ।
ज्योत्स्नावदाते कुसुमावकीर्णे शुद्धान्त[17]पृष्ठे रमते प्रियेण ॥२२॥

ततः प्रावृट्काले—

गर्जज्जीमूत[18]सङ्घे विलसिततडिति प्रोत्किरद्वारिधारे
संडीनैर्हंससङ्घैः [19]शबलितगगने प्रोन्नटद्[20]बर्हिसार्थे ।
[21]आरामे कोकिलालीकलकलकलिते वृक्षवृन्दावकीर्णे
ह्यान्दो[22]लौघैर्विलासैः प्रमुदितहृदया क्रीडति स्म प्रियेण ॥२३॥

---

१ शिरोगृहम् । २ अत्र श्लोके सावयवरूपकालङ्कृतिः ।
३ 'यानपात्रे शिशौ पोतः' इत्यमरः । जहाज इति प्रसिद्धम् ।
४ रत्नखानिः । ५ तान् भोगान्, तद्रूपाणि रत्नानीत्यर्थः ।
६ 'मूल्यात् इविक्रेतृतः' इति पदच्छेद । इः कामः । ७ सृष्टिरित्यर्थः
८ रूपकम् । ९ अद्भुतशौर्यवर्णनात्स्युक्तिरलङ्कारः ।
१० पुष्पकाले वसन्ते । ११ गुलाल इति प्रसिद्धः । १२ मृगमदः कस्तूरी
१३ धारागृहं पिचकारीति ख्यातम् । १४ कांस्यतालम् ।
१५ डफ इति प्रसिद्धः । १६ चन्दनम् । १७ अट्टे । १८ मेघः ।
१९ चित्रितम् । २० मयूरः । २१ उपवने । २२ झूला इति प्रसिद्धः ।

अनन्तरं शरदिष्टे—

शीर्षागाराऽट्टपृष्ठे सुरभितरलसत्पारिजातस्रगालि-
व्यासक्ताऽऽपीनवक्षोरुहयुगललुठत्केतकीरेणुपुञ्जा ।
इन्दुज्योत्स्नावदाते शयनतल इयं प्राणनाथेन साकं
मन्दं मन्दं वहद्भिर्मलयजपवनैर्हृष्टचित्ता तदासीत् ॥ २४ ॥

अथो हेमन्तावसरे—

बाला चन्द्रगृहान्तरे सुविजने ताम्बूलपूर्णानना
शीतोत्कम्पतनूरुहाञ्चिततनुर्माञ्जिष्ठरक्ताम्बरा ।
कस्तूरीरसलिप्तपीवरकुचाभोगा प्रियस्योरसि
क्लान्ता सा प्रसभेन चित्रसुरतैः सुप्ता तदासीदहो ! ॥ २५ ॥

अथ शिशिरसमये—

पर्यङ्काधोहसन्तीगतपवनसुहृत्तप्तगर्भालयेऽस्मिन्
बाढाश्लिष्टा प्रियेण प्रमुदितहृदया तूलसान्द्रांशुकाढ्या ।
कस्तूरीदेवपुष्पक्रमुकफलयुतोद्वीटिकापूर्णवक्त्रा
शेते सौहार्दभारालसतनुलतिका चाटुसंलापिनीयम् ॥ २६ ॥

एवं तौ समकालं क्रीडन्तौ विजयेताम् ।

**प्रथमः**—( सानन्दम् )

हंतो हयरिपुर्यया विजितलेखवृन्दोऽसुर-
स्तदीयकृपया सदा मिथुनमेतदाक्रीडतु ।
परस्परमनोधरातलगतप्रहार्दोलपो
दिवानिशमुपैधतां विविधभोगपुष्पच्छदैः ॥ २७ ॥

( इति निष्क्रान्ताः सर्वे । )

इति श्रीधर्माधिकारिकृष्णविरचिते कामकन्दलनाम्नि-
नाटके तृतीयोऽङ्कः ।

---

समाप्तं चेदं कामकन्दलं नाम नाटकम् ।

---

१ शिरोगृहम् । २ शिरोगृहमध्य । ३ बोरसी इति ख्याता । ४ अग्निः । ५ वासगृहे । ६ कार्पासः । ७ लवङ्गम् । ८ ताम्बूलम् । ९ भरतवाक्यमिदम् । १० महिषः । ११ देवाः । १२ वल्ली । रूपकम् १३ वर्धताम् । १४ रूपकालङ्कारः ।

* श्रीः *

श्रीधर्माधिकारिकृष्णपण्डितविरचितम्

# श्रीकालिकामन्दाक्रान्ताशतकम् ।

श्रीकालि ! त्वद्गुणलवमपि प्राप नो वेदराशि-
यस्यान्तं नो विधिमुखसुरा नारदाद्या मुनीन्द्राः ।
प्रापुस्तत्त्वां सकलकलनाशालिनीं ब्रह्मरूपा-
माद्यां स्तोतुं कथमहमहो ! शक्नुयामल्पजन्तुः ॥ १ ॥

त्वं जिह्वाग्रे नटसि जगति स्वेच्छया यस्य मात-
र्वाचां गुम्फः प्रसरति मुखात्तस्य लोकोत्तरश्रीः ।
तस्मात् स्तव्यं स्तुतिरपि शिवे ! स्तावकोऽपि त्वमेव
वैशिष्ट्यं किं मम कृतनुतौ न्यूनतोद्रिक्तताख्नु ॥ २ ॥

श्रेष्ठ्याद् याथां द्रुहिणशरणं, सोऽपि वैकुण्ठनाभौ
शेते, सोऽपि स्वनयनकजेनार्चयामास शम्भुम् ।
सोऽपि क्ष्मायां स्वहृदि चरणं ते निधायाथ शेते
तत्त्वां यातः शरणमधुना पाहि मां दीननाथे ! ॥ ३ ॥

पर्यङ्कत्वं विधिहरिहराद्याः शवीभूय मातः !
प्रापुर्विज्ञापनकृत उमे ! वासवाद्यास्तु देवाः ।
दूरं द्वारादवसरमनुप्रेक्षमाणा यतन्ते
विज्ञप्तिर्मे कथमथ पुरस्ते भवेत् क्षुद्रजन्तोः ॥ ४ ॥

हे ! मातस्ते चरणकमलोपासनायां त्रिकालं
दृष्ट्वा दृष्ट्वा विमलनखरे बिम्बितान् ब्रह्मकोशान् ।
अव्याजाद् यान् विधिहरिशिवास्त्यक्तकर्तृत्वगर्वा
नारीभूता नमितवदना अस्तुवन् भूरि भूरि ॥ ५ ॥

वासः काष्ठाऽऽभरणमुरगा भाजनं नुः कपालं

क्रोष्टूथः सख्यः कुणपशयनं पित्ररण्ये निवासः ।

सामग्रीत्थं तव परशिवेऽकिञ्चनी त्वं तथाप्यै-

श्वर्यं तुच्छीकृतसुरपदं सुप्रसन्ना ददासि ॥ ६ ॥

श्यामासि त्वं गिरिशमहिले ! पादपद्माश्रयाख्यां-

श्चन्द्रज्योत्स्नाविशदयशसां पात्रभूतान् करोषि ।

अस्येवं त्वं विषमनयना पश्यसि स्वीयभक्तान्

सर्वान् श्यामे ! बत समदृशा ते समस्तं विचित्रम् ॥ ७ ॥

माध्वीकुम्भान् पिबसि सततं रक्षणे सावधाना

गर्जस्येवं भयकररवैर्भीतिभावं धुनोषि ।

एवं धत्से प्रकटितमुखं शोणितासारकीर्णं

भक्तेष्वद्धा भवसि मृदुला किं ब्रुवे ते चरित्रम् ॥ ८ ॥

मालां धत्से मनुजशिरसां नारमुण्डं कराब्जे

कट्यां काञ्चीं नरकरमयीं श्रोत्रयोः शावयुग्मम् ।

इत्थं साक्षादशुभचरिता मङ्गलं भक्तिभाजां

नव्यं नव्यं गिरिशदयिते ! सर्वदा त्वं करोषि ॥ ९ ॥

पत्युर्वक्षःस्थलमुपगता नृत्यसि त्वं यथेच्छं

वेदो लोको वदति लिखति त्वां सतीति प्रकामम् ।

धूमारूपं प्रविधृतवती भक्षयित्वा स्वकान्तं

सौभाग्यं ते स्थिरतरमहो ! तेन तत्त्वं न विद्मः ॥ १० ॥

पत्युर्निन्दाश्रवणजरुषा यत्त्वया स्वं शरीरं

त्यक्तं शम्भुप्रधृतमवनौ खण्डशो विष्णुकृत्तम् ।

स्थाने स्थाने पतितमकरोत्पुण्यदां पीठमालां

कोपोऽप्युच्चैर्जगदुपकृतिं कालिके ! ते तनोति ॥ ११ ॥

निद्रामुग्धे कमलनयने तच्छ्रुवोगोर्द्जाता-

देकाम्भोधावतिमदकलात् कैटभात्त्वां मधोश्च ।

भीतो धाता हरिनयनगामस्तवीत् कालरात्रीं
त्रिंशद्दृग्भिर्मुखकरपदां पङ्क्तिभी राजमानाम् ॥ १२ ॥
अङ्घ्रिन्यासाऽऽनमितवसुधा त्वं शिरोरत्नघृष्ट-
व्योमाभोगा दशशतभुजव्याप्तदिक्चक्रवाला ।
वैकुण्ठाद्यामरतनुसमुद्भूततेजःस्वरूपा
हन्तुं दुष्टं महिषदनुजं प्रादुरास्से स्म मातः ! ॥ १३ ॥
कर्पूराभं वदनकमलं दोर्लता नीलवर्णा
वक्षोजौ ते शशधरसमौ शोणरागं वलग्नम् ।
श्यामे जङ्घे जघनमगजे ! कर्बुरं माल्यभूषा-
वासोगन्धा जननि ! शबला रूपमेतद्विचित्रम् ॥ १४ ॥
युद्धोत्कानां शिखरिवपुषां कन्दराद्यन्मुखानां
दैतेयानां दृढतरशिरोभाण्डखण्डं विभिन्दन् ।
दिग्भित्तीर्दिक्करिवरघटाः स्फोटयंस्त्वत्कराब्जे
घण्टानादो जयति गिरिजे ! चित्रघण्टासि तेन ॥ १५ ॥
मातर्व्याप्ताञ्जगति सकले दानवान् रक्तबीजान्
दृष्ट्वा वक्त्रं निजमतिमहद् व्याददाना पृथिव्याम् ।
ओष्ठं चैकं गगन इतरं संविधायाशु तूर्णं
खादन्ती त्वं विचरसि रणे दैवतैर्वन्द्यमाना ॥ १६ ॥
प्रत्यालीढासनशवगता वर्तुलाक्षी स्वकान्तं
बद्धवाप्ता सुप्रहसितमुखी चारुलम्बोदरी च ।
हस्तैः कर्त्रीमसितनलिनं चन्द्रहासं कपालं
धृत्वा मातर्विहरसितरामुग्रतारेति नाम्ना ॥ १७ ॥
युद्धे शङ्खासुरमुखदशाकारभण्डासुरेन्द्रं
हन्तुं स्वीयाग्रखरदशकान्माधवीयावतारान् ।
मत्स्याद्यान् वै युगपदितरांल्लीलयोत्पादयन्ती
विख्याता त्वं विहरसि शिवे ! राजराजेश्वरीति ॥ १८ ॥

एकैव त्वं वनमुपगता स्वांसयुग्माद्विहर्तु-

मुत्पाद्यालियुगमतितरां क्षुत्पिपासातुराऽभूः ।

छित्त्वा शीर्षं निजमतिजवात्कण्ठगा रक्तधारा-

स्ताभ्यां साकं करधृतमुखेनापिबश्छिन्नमस्ता ॥ १९ ॥

त्वं ब्रह्मास्त्रं जननि ! भुवनस्तम्भहेतुः करोषि

स्मृत्यैव द्राक् कलुषितधियां मुद्रणं; वैरिजिह्वाम् ।

वामे धृत्वाऽपर इह करे मुद्गरं सर्वपीता-

नाम्ना लोके जयसि बगले ! व्याकुला भक्तकृत्ये ॥२०॥

रिङ्गद्भृङ्गावलितरलितालीनमत्तालिमाला-

ऽम्भोजश्रेणीवलयितबृहत्पद्ममध्योपविष्टा ।

उच्छुण्डेभार्पितघटजलप्लाविता पद्महस्ता

मातर्भक्तं घनभरयुतं कर्तुमेवंविधासि ॥ २१ ॥

कान्तारस्थं प्रणयकलहाद्भिल्लरूपं स्वकान्तं

मातः ! संमोहयितुमभजस्त्वं किरातीस्वरूपम् ।

गुञ्जाहारं कुटिलचिकुरं बर्हकाञ्चीसुरम्यं

शृङ्गीवाद्यं करधृतधनुश्चैकवीरेति गीतम् ॥ २२ ॥

बाह्याभ्यन्तर्जननि ! जगतो वीतिहोत्रस्वरूपा

पक्तिं भुक्तिं परिणमयसि त्वं न चान्या भवानि ! ।

प्रत्यन्ताद्रौ हिमशिखरिणः स्पष्टरूपा यतस्त्वं

ज्वालामुख्येवमभिगदिता भासि गीतप्रभावा ॥ २३ ॥

मुक्ताः स्युर्वै जनिमरणतो जन्मिनः सद्य एव

निश्चित्यैवं सह पुरभिदा स्थावरीभूय चैकम् ।

पञ्चक्रोशात्मकमतिमहल्लिङ्गरूपं दधाना

नाम्ना गौरीमुखमिति तथा काशिकासि त्वमेव ॥ २४ ॥

श्रीरामोऽसौ त्रिभुवनजयी यत्र कुण्ठामवाप

क्रूरं तं वै शतमुखमभिद्रावणं रावणाख्यम् ।

सीतापि त्वं निजमतिमहद्रूपमादाय हत्वा
भीतैर्देवैः कृतकरपुटैर्वन्दिता नृत्यसि स्म ॥ २५ ॥
उर्वीरूपा जननि ! सहसे प्राणिनां भूरिमन्तून्
पाथोरूपा त्रिभुवनमिदं प्रीणयस्यम्बुपूरैः ।
तेजोरूपा समजनिमतो दर्शयस्यर्थजातं
वाताकारा त्वमसि जगतः श्वाससञ्चारकर्त्री ॥ २६ ॥
एकैव त्वं जननि ! जगतामीश्वरी न द्वितीया
पर्यायैस्त्वं पृथगिव सतां भासि तत्तत्स्वरूपा ।
काली तारा जलनिधिसुता छिन्नमस्ताऽन्नपूर्णा
वाणी दुर्गा सवितृतनया सुन्दरी भैरवीति ॥ २७ ॥
शून्यालम्बा जलधिवसना तिष्ठति द्वादशात्मा-
ऽप्येवं शून्ये भ्रमति गगने मारुतोऽपि प्रवाति ।
शक्त्यैवैतत् सकलजगतो विद्यते वस्तुमात्रं
तस्मान्मुख्या ह्यसि गिरिसुते ! शक्तिरूपा त्वमेव ॥ २८ ॥
श्रीकण्ठेन्द्राम्बुजकमलजाः शक्तिहीनाः प्रकर्तुं
स्वं स्वं कृत्यं जननि ! पुरतः प्रास्तुवन् शक्तिलब्ध्यै ।
तेभ्यः प्रादास्त्वमतिशयिताश्चण्डिकापद्मवासा-
सावित्रीश्च, प्रकटितमतः सर्वमुख्या त्वमेव ॥ २९ ॥
या या पुंस्ता त्रिभुवनगता भासते देवि ! सा सा
स्पष्टं सर्वा तव परिणतिः सृष्टये नान्यथेति ।
युद्धे शुम्भासुरमुखभवे सा ह्यकिञ्चित्करामूत्
स्त्रीत्वेनैव प्रशमितमभूत् क्रूरदेवारिवृन्दम् ॥ ३० ॥
मातर्ध्वन्यक्षरपदवचोरूपिणी या त्वदीया
नो चेदत्र स्थितिरविरता वेदशास्त्राणि न स्युः ।
संज्ञाहूतेरपि विरहतः सर्वमेतत्तमोऽन्धं
साकल्पा नः स्फुरतु वदने भारतीनामधेया ॥ ३१ ॥

शम्भोर्लिङ्गं मुनिशयनतः सम्पतद् गुह्यमात्र
वामाक्षीणां त्रिभुवनभुवां व्याकुलं सञ्चकार ।
तत्संरोद्धुं त्रिदशविनुता मेखलाऽभूस्त्वमेव
नान्याद्यापि त्रिभुवनतले पूज्यते तत्तथैव ॥ ३२ ॥
हे ! मातस्ते पदनखसमुन्मार्जने धातृहस्ताद्
यत्क्षीराब्धौ समलसलिलं सान्द्रमारात् पतत्सत् ।
गोलाकारं परिणतमभूच्चन्द्ररूपेण चारु
व्योम्न्यद्यापि स्फुटतरमहो ! चन्द्रिकाभिश्चकास्ति ॥३३॥
दृष्ट्वा चन्द्रस्तव नखपदं तुल्यतामाप्तुकामो
लब्ध्वा तेजः सवितुरमलं मन्थरं वर्धमानः ।
तादृग् जातोऽहमिति मनसाभ्येत्य खे तां ना लेभे
गत्वा गत्वा प्रतिकुहु रविं दुःखितः संक्षिणोति ॥३४॥
स्वर्गङ्गाया ह्रदसमुदितं दिव्यमिन्दीवरं किं
शालिग्रामो द्रुहिणनिहितस्तारपीठेऽर्चितुं वा ।
किं वा भूमेर्नयनकमलप्रोद्गता कृष्णतारा
किं वा शम्भोर्हृदयनिहितं ते पदाब्जं विभाति ॥ ३५ ॥
जीमूताभाङ्गुलिरविसुतास्वच्छपौनर्भवाली-
गङ्गालाक्षारुणतलसुरज्येष्ठजानिम्नगानाम् ।
सम्भेदाख्ये चरणकमले तीर्थराजे प्रयागे
मातर्नित्यं वसतु हृदयं स्वत्स्वरूपाप्तये मे ॥ ३६ ॥
दृष्टश्चन्द्रो धवलकिरणः सर्वदा कोऽयमन्यः
श्यामज्योत्स्नो विजयत इति ज्ञातुमम्ब ! त्वदास्यम् ।
दृष्ट्वाऽऽलम्ब्याम्बुदमभिनभो नालयुञ्ज्युत्पलानि
यान्ति श्रोणिस्थितकटिलसत्पाणिकाञ्चीमिषेण ॥ ३७ ॥
हे ! मातर्यत्तव कुचयुगं पीवरं गाढमुच्चं
वैस्यैर्दृष्टं विषमरभृतं, यन्महेशानदृष्टम् ।

शृङ्गाराढ्यं, चरणकमलोपासकैर्यच्च दृष्टं
क्षीराऽऽपूर्णं तदिह भवतात् पुष्टयेऽहर्निशं मे ॥३८॥
दीर्घीभूतासितघनततेरूर्ध्वमाभाति विद्युत्
कृष्णाहीशो गगनपतितां लेढि वा क्षीरधाराम् ।
किं वाकाशे तरणितनयाजाह्नवीसङ्गमोऽयं
देवैरित्थं जयति करगा तर्किता खड्गधारा ॥ ३९ ॥
मासे मासे तुहिनकिरणा नूतना भानुयोगाद्
ये जायन्ते त इह गगने चन्द्रिकाभिः स्फुरन्ति ।
ये ये प्रज्ञाः स्रगिव गिरिजे ! तावकीने शिरोधौ
राजन्ते ते विपुलमहसो मुण्डमालामिषेण ॥ ४० ॥
देवश्चन्द्रस्तव मुखसमः सम्यगाह्लादकारी
तत्सारूप्ये सति नु भविता ते मुखाब्जेन साम्यम् ।
इत्थं मत्वा सलिलवसतिं संयमं प्राप्य चेन्दोः
कुर्वन्त्यद्याप्यनलसमुपस्थानमिन्दीवराणि ॥ ४१ ॥
विद्युल्लेखा सजलमुदिराद्भाति किं प्रोल्लसन्ती
वेधःपुत्री प्रवहति महानीलशैलादियं किम् ।
तर्केणेत्थं त्रिभुवनगतैर्मातरुत्प्रेक्ष्यमाणा
वक्त्राम्भोजात्तव विजयते निःसृता लोलजिह्वा ॥ ४२ ॥
यस्ते रक्तोत्पलदलसमः क्रोधताम्रः कटाक्षो
दैत्येन्द्रेषु प्रपततु स वै, यश्च नीलाब्जतुल्यः ।
स्नेहश्यामः स पततु शिवे, यः सिताम्भोजकल्पो
वात्सल्याऽच्छः स पततु मयि प्रार्थये मातरेतत् ॥४३॥
मातः ! पृष्ठाऽऽनमितचरणाबद्धचूडं विसर्प-
त्तेजोराशिं श्रवणयुगले बिभ्रती शावयुग्मम् ।
आद्यावन्ते रविशशियुगं धारयन्ती निशेव
मेघश्यामे ! वितर सहसा स्वापतुल्यं समाधिम् ॥४४॥

त्यक्त्वा भानुर्निजतपनतां वर्तुलत्वं च रूपं
रेखाकारं नयनसुखदं दीप्तिमत् सन्दधानः ।
रात्रेरन्ते विकचकमलं श्लेष्टुमभ्यागतः किं
सीमन्ते ते जयति जननि ! स्पष्टसिन्दूररेखा ॥ ४५ ॥

दुष्टो राहुर्ग्रसतु दयितं नेति नक्षत्रवत्या
पत्न्या स्वीयैरवयवचयैः किञ्चिदाच्छादितो नु ।
मुक्ताजालाञ्चितसुमसृणीभूतसीमन्तमूले
मातर्नित्यं तव विजयते शीतभानुः कलावान् ॥४६॥

गात्रच्छाया निपतति तव श्यामला यत्र यत्र
तस्मिंस्तस्मिञ्जगदुपकृतिः कालिके ! पर्युदेति ।
श्यामा मेघाः सकलभुवनं प्रीणयन्त्यम्बुवर्षैः
श्यामान्येवोल्लुपतरुवरैः काननान्युत्फलन्ति ॥ ४७ ॥

सृष्ट्यादौ त्वं धरसि सगुणं रूपमाद्याऽसि तस्मा-
दौदार्यं ते जयति वसतौ दक्षिणाख्यासि तेन ।
कल्पान्ते त्वं कलयसि जगत्तेन कालीति गीता
सर्वाभावे गगनसदृशी निर्मला श्यामलेति ॥ ४८ ॥

दिग्वासास्त्वं जननि ! जगति प्रोच्यसे खाम्बरा नो
दिग्भिस्तुल्येऽपि सति मयि ते वस्त्रता नास्ति कस्मात् ।
इत्थं खेदाद् घनरवमिषात्तारशब्देन वर्षा-
धाराव्याजाद्बहुतरमिदं रोदिति व्योम मन्ये ॥ ४९ ॥

देवस्त्रीभिः परिमलभरैर्मातरुद्वर्त्य येन
त्वं कैलासे मणिमयघटैः स्नापिता दिव्यवारा ।
तत्तोयं क्ष्मातलमुपगतं नीलभासा विमिश्रं
कालिन्दीति प्रथितिमगमद् भानुकन्येत्यलीकम् ॥५०॥

हे ! मातस्ते स्नपनजजलं भालसिन्दूरमिश्रं
क्षिप्तं व्योम्नि प्रवहमरुता शुष्यदत्युग्रतेजः ।

पिण्डीभूतं दिनकरमिषाद् बम्भ्रमीति प्रकामं
व्यक्तीकर्तुं कुवलयमिदं ध्वान्तजालावनद्धम् ॥ ५१ ॥
हस्ते भानुं कनककलशं चाम्बरं शोणरागं
धृत्वा स्नाता जलनिधिजले सान्ध्यमन्त्रैर्द्विजोच्चैः ।
हर्षावेशादुदयमचलं यन्त्रराजं प्रकल्प्य
प्राची प्रातर्जननि ! कुरुते प्रत्यहं ते सपर्याम् ॥ ५२ ॥
सायंपूजाविधिषु खसरित्पाथसा पाद्यदाने
पादाब्जं ते जननि ! विधिना क्षालयित्वाग्रहस्ताः ।
क्षिप्तास्तेभ्यः सलिलकणिकाः कीर्यमाणाः समन्ताद्
भान्त्यद्यापि स्फुटतरमिमास्तारकावाररूपाः ॥ ५३ ॥
कृत्वा सान्ध्यं तिमिरमचलाभाजनस्थं हि धूप-
माकीर्याऽच्छा उडुसमुदया अक्षता व्योमपात्रे ।
मध्ये चन्द्रं गृहमणिमवस्थाप्य चारार्तिकं वै
कुर्वन्त्यम्ब ! प्रतिसितदलं दिग्वधूट्यस्तवाग्रे ॥ ५४ ॥
मातः ! स्नात्वा जलधिसलिले कौमुदीधौतवासो
धृत्वा चार्कं तिलकमलिके झिल्लिकामन्त्रपाठम् ।
कुर्वंश्चन्द्रः सह दयितया यामवत्या तवाग्रे
तारापुष्पाञ्जलिमवकिरन् दाक्षिण्यं बम्भ्रमीति ॥ ५५ ॥
दोलामेति प्रधृतविकचेन्दीवरं बर्हिबर्हं
तस्याधस्तात् कलशयुगलं लाङ्गलिस्रग्विभूषम् ।
तस्याधस्तात् सबिसकमलश्रेणिका नृत्यमेति
त्वं पुंभावा विहरसि शिवे ! तेन नैतद्विचित्रम् ॥ ५६ ॥
दंष्ट्राघोरं तव हि वदनं सृक्किणी रक्तपूर्णे
मुक्तान्केशान् कलितकुणपं कर्णयुग्मं भवानि ! ।
आरावं च प्रलयघनवद्वीक्ष्य मा यातु भीतिं
भक्तस्तस्मादभयदकरं सर्वदा त्वं बिभर्षि ॥ ५७ ॥

रत्नस्वर्णाभरणविरहात् कौणपाभूषणाच्च
दिग्वासस्त्वादपिपितृवनं वासतोऽकिञ्चनेति ।
मत्वा भक्तो भवतु विमना मेति नूनं दयार्द्रा
धत्से मुद्रां वरवितरणीं सन्ततं कालिके ! त्वम् ॥ ५८ ॥
हुङ्कृत्या वा रुडरुणदृशा दैत्यवारानपारान्
हन्तुं शक्ताप्यसि गिरिसुते ! खड्गमेतद्बिभर्षि ।
धारातीर्थे कलुषमखिलं क्षालयित्वाशु मुक्तिं
यान्त्वेवं ते मतिरवसिता ते दयार्द्रेति मन्ये ॥ ५९ ॥
धर्मध्वंसं जननि ! कुरुते यः प्रहर्ताऽऽततायी
हन्तव्योऽसौ विरतममतीभूय वैर्यन्तरस्थः ।
बाह्यो वेत्थं मतिरविचला स्यादिति ज्ञापनार्थं
मद्भक्तानां स्वकरकमले छिन्नशीर्षं बिभर्षि ॥ ६० ॥
ब्राह्मीरूपा त्वमुषसि शिवे ! कोटिसूर्यप्रकाशा
मध्याह्ने त्वं जलधरसमा वैष्णवी दीप्ततेजाः ।
सायाह्ने त्वं शतशशिनिभा शाम्भवी चित्स्वरूपा
सिद्धिं देहि प्रकटितमुखि ! त्वं निशीथे तुरीया ॥ ६१ ॥
काकैर्जुष्टं कुणपनिचितं गृध्रसङ्घावकीर्णं
क्रोष्ट्रीयुक्तं चितिसमुदितोद्गाढधूमाविलं च ।
श्वव्राताढ्यं भयकृदतुलाङ्गारदीप्तं श्मशानं
त्वद्वासेनाशुभमपि शुभं सिद्धिदं साधकानाम् ॥ ६२ ॥
त्वन्मन्त्रस्य प्रभवति शिवे ! साधनं सिद्धिकर्तृ
प्राक्संस्कारादिह जनुषि तन्नैव मे भाति यस्मात् ।
यत्नारब्धेऽप्यथ जपमुखे हन्यते विघ्नसङ्घै-
र्नाम्नैवाहं तव शरणगः पाहितो मां दयालो ! ॥ ६३ ॥
काका गृध्राः कुणपचितयः कुक्कुराः फेरवाश्च
त्वत्स्थानस्थास्त्वमिव नितरां पूजनीया भवन्ति ।

वाक्चित्राद्यैस्तव शरणगस्त्वत्सुतोऽहं तु लोके
पूज्यो नास्मि क्वचिदपि शिवे ! ब्रूहि बीजं किमत्र ॥६४॥
मातर्हस्ते तव वरदया मुद्रया लाञ्छिते या
शक्तिर्वह्नाविव विजयते दाहिकाऽभीष्टदात्री ।
मय्यत्यन्ताभिलषितशिवे मोहवार्धौ निमग्ने
दीने भक्ते चरणशरणे कुण्ठिता सा कुतोऽभूत् ॥ ६५ ॥
त्वय्यम्बाले ! स्ववरदकरं संप्रसार्य स्थितायां
मौर्ख्यादीहे वसु मनुजतः कल्पवल्लीं विहाय ।
तन्मौर्ख्यं मे व्रजतु विलयं त्वत्पदे भक्तिरास्ता-
मित्थं श्राव्या सदयहृदये ! प्रार्थना पामरस्य ॥ ६६ ॥
नास्त्येतच्चाऽमुकमपि न हीत्यादि वाक्यं गृहिण्याः
श्रावंश्रावं हृदयकमलं कोटिधा भिद्यते मे ।
सम्पाद्यं तत्कथमपि मया चेन्न सीदेत्कुटुम्बं
कीदृक् कुर्यां वद तव पदोपास्तिमम्ब ! त्वमेव ॥ ६७ ॥
प्रावोचस्त्वं श्रुतिषु गिरिजे ! धर्ममूलं गृहित्वं
तस्माद्दारग्रहमकरवं नाल्पमप्यत्र किन्तु ।
धर्मं कर्तुं तव पदकजप्राप्तिहेतुं समर्थो
दारिद्र्यात्, तच्छमय कृपया येन ते साधु वाक् स्यात् ॥६८॥
सीदन्तं वै निजपरिजनं वस्त्वलाभेन गृह्ये
दृष्ट्वा सम्पादनकृत उमे ! किं करोमि क्व यामि ।
एतद् दुःखं महदिति पुरः कस्य वाच्यं मयाद्य
त्वं मातेति प्रविकलतया वच्मि तन्नाशयाशु ॥ ६९ ॥
एकाक्षोऽपि प्रभुरतिकृपापूर्णदृष्ट्या स्वकीयं
पश्यत्येव द्विनयनवतः का कथा त्वं तु मातः ! ।
आम्नाद्दिव्यत्रिनयनकजा सत्यपि स्वीयबालं
किं नो पश्यस्यगतिकगतिं मां दयालो ! शरण्ये ! ॥७०॥

नामोच्चारस्तव सकृदुमे ! सर्वदुःखान्तकारी-
त्येवं मत्वा द्युनिशमनिशं मत्तवत् त्यक्तसर्वम् ।
काली कालीत्यहह ! जपतः शुष्कतामाप जिह्वा
मातर्मेऽद्यावधि करुणया त्वं कुतो नो शृणोषि ॥ ७१ ॥

त्वत्पादाब्जस्मृतिरपि शिवे ! सर्वदुःखं निहन्ती-
त्येवं स्पष्टं वदति निगमः, सत्यमेतन्मृषा वा ।
सत्यं चेत् त्वद्गुणसमुदयोत्कीर्तनेऽप्यस्मि दुःखी
मिथ्या चेत् स्यान्निगमवचने न प्रतीतिर्जनस्य ॥ ७२ ॥

अद्य श्वो वा तदपरदिने त्वं प्रसन्ना भवित्री-
त्येवं मत्वा प्रतिदिनमुमे ! त्वामभिष्टौमि मातः ! ।
त्वं तु स्वान्ते मम विषयकं वत्सलत्वं न किञ्चिद्
धत्से माता पृथुकहठतोऽप्यर्पयत्येव दुग्धम् ॥ ७३ ॥

बाले किञ्चिद्रुदति जननी धावति व्यग्रचित्ता
नामग्राहं द्युनिशमसिते ! रोदिमि त्यक्तकण्ठः ।
श्रुत्वापि त्वं न मयि दयसे नाथवा त्वं शृणोषि
नो जाने ते सुतविषयिणी कीदृशी चित्तवृत्तिः ॥ ७४ ॥

नाहं जाने तव जपविधिं न्यासजालं न चार्चां
त्वं माताऽहं सुत इति परं केवलं कालि ! जाने ।
मूढं विज्ञं कथमपि सुतं वत्सलोपेक्षते नो
तस्मान्मातः ! कृतिविरहितं पाह्युपेक्षां विहाय ॥ ६५ ॥

ढुण्ढिः स्कन्दोऽहमपि तनयस्ते शिवे ! स्नेहपात्रं
तादृक् स्नेहो मयि तव न हीत्यत्र बीजं हि मन्ये ।
मज्जामेदोरुधिररसमांसादिभिर्निर्मितं किं
दृष्ट्वाऽश्लीलं वपुरशुचि मे त्वं जुगुप्सां करोषि ॥ ७६ ॥

देहे मांसादिभिरुपचिते मानुषं जन्म दत्त्वा
पश्चात्तस्मिञ्जननि ! हि जुगुप्साकृतिर्नैव युक्ता ।

आरोप्य त्वं गरलयुगपि च्छेदनीयः स्वयं नो
मत्वा चैवं मयि कुरु कृपां कालिके ! बालकेऽस्मिन् ॥७७॥
एतन्मेऽपि प्रकथनमहो ! युज्यते नैव यस्माद्
वक्त्राब्जं ते विजयत इदं रक्तधारावलिप्तम् ।
स्नेहाभावे तदपरमतः कारणं प्राक्तनं वा
पापं मोहात् कृतमिह जनौ तत्क्षमस्व प्रसीद ॥ ७८ ॥
वक्ष्यस्येवं यदि मम सुतास्त्वादृशाः सन्त्यनेके
मैवं वादीर्जननि ! न हि ते मादृशा दुःखवन्तः ।
विद्याहीनो धनविरहितोऽनेकरोगार्तगात्रो
ऽसत्कर्माब्धश्चपलहृदयो बहृणी चास्मि दीनः ॥ ७९ ॥
बाढं कुर्यां यदि तव जपं न्यासखण्डं च पूजां
दद्यास्त्वं मे सुखमविकलं मातृता का तदा ते ।
मातर्मातर्जननि ! जननीत्येवमामन्त्रणेषु
प्रेम्णा दद्या यदि च शिशवे मातृता स्याद्यथार्था ॥ ८० ॥
मातस्त्वं 'मे सुत' इति धिया पश्य मा पश्य वा मां
त्वां त्वेवाहं ननु परिचिनोमि 'प्रसू'रित्यजस्रम् ।
एतत् कालो गगनमनिलो भूर्दिशो भानुरिन्दु-
र्जानन्तीमे कथनसमये साक्षिणो मेऽभविष्यन् ॥ ८१ ॥
गङ्गारूपा त्रिजगदखिलं स्नानमात्रात्पुनासी-
त्येवं मत्वा त्वयि नियमतः स्नामि नित्यं, तथापि ।
नो पूतं किं जडवपुरिदं मानसं वा मदीयं
येन स्यात्ते मयि शुभकरः सुप्रसादो भवानि ! ॥ ८२ ॥
दाक्षायण्याः पतितचरणाङ्गुष्ठपीठे प्रसिद्धे
कालीघाटे वरदनकुलीशेन साकं स्थितासि ।
भक्तान्सर्वान् वितरसि शिवेऽभीष्टसिद्धिं समग्रां
मां किं नो ते चरणपतितं पश्यसि स्वीयबालम् ॥ ८३ ॥

काष्ठे कुड्ये त्वमसि गिरिजे ! सर्वतो व्याप्तरूपा
मद्दुःखं त्वं दिनादिनभवं वीक्षसे सर्वमेव ।
बाले सागस्यपि हि जननी जातु नोपेक्षते तं
किं वा त्वं नो भुवनजननी त्वत्सुतोऽहं न किं वा ॥८४॥

हे ! मातस्ते सकलविषये कारणत्वं प्रसिद्धं
मद्दुःखेऽपि त्वमसि नियतं कारणं नेतरद्धि ।
सत्यं सागा अहमिति ततः प्रार्थये त्वां दयालुं
क्षान्त्वा सर्वं मम सुखविधौ कारणत्वं गृहाण ॥ ८५ ॥

ध्यायन्ति त्वामसिनृकवराऽभीतिहस्तां त्रिनेत्रां
केचित् केचिद्बिसतनुतरां मूलचक्रे भुजङ्गीम् ।
नाहं ध्यातुं किमपि गिरिजे ! शक्त उन्मुग्धचेता
नाम श्रुत्वा मम मुखगतं बालकस्येव पाहि ॥ ८६ ॥

सान्द्रानन्दा विहरसि महाकालवत्सोपरिष्टाद्
दग्धं कामं पुनरपि समुत्पाद्य रत्यर्थनेन ।
चित्रैर्बन्धैः पुरुषदशैश्चुम्बनाद्यैर्विलासै-
स्तस्मात् किं त्वं मम गिरिसुते ! क्रन्दितं नो शृणोषि॥८७॥

बाहुद्वन्द्वाञ्चितपृथुकुचापीवरस्कन्धदेशौ
मत्वा पार्श्वद्वयमभिगतौ हस्तिगण्डौ द्विशुण्डौ ।
क्रोधाद्धन्तुं प्रतिभटधिया धावमानं गजास्यं
बालं दृष्ट्वा हससि नितरां विस्मरस्यम्ब ! किं माम् ॥८८॥

पुत्रं स्वोद्वर्तनमलभवं प्रातिहार्ये नियुक्तं
रोधक्रुद्धत्रिपुररिपुणा कृत्तशीर्षं विलोक्य ।
हाहाकारं सजलनयनं शोचसि स्माऽऽर्तनादं
मातर्दृष्ट्वा षडरिनिहितं शोचसि त्वं न किं माम् ॥८९॥

रे रे दैत्यापसद ! बहुधा किं मुधा गर्जसि त्वं
पीत्वा हालां तव हृदि दृढं शूलमारोपयामि ।

याते मृत्युं त्वयि दिविषदो विज्वरा गर्जितार
उक्त्वैवं त्वं महिषमवधीर्मत्सपत्नान्न हंसि ॥ ९० ॥
राज्यभ्रष्टः सुरथनृपती राज्यमात्राभिलाषी
तस्मै प्रादास्त्रिभुवनगतं त्वं मनुत्वं च राज्यम् ।
औदार्यं ते चरणशरणेष्वीदृशं ख्यातमेत-
न्मय्येव त्वं भवसि कृपणा केन जाने न मातः ! ॥ ९१ ॥
हे ! मातस्त्वं श्रुतिषु जगदुद्धारिणीति प्रसिद्धा
पापासक्ता जगति बहवस्तारिता भक्तिहीनाः ।
भक्तं दीनं चरणशरणं नाममाला जपन्तं
मामद्यापि त्वमुदितदया नानुगृह्णासि कस्मात् ॥ ९२ ॥
हे ! मातस्ते पदसरसिजासक्तचेतःषडङ्घ्रे-
राधिव्याधिप्रभृतिविपदं वीक्षसे मे किमित्थम् ।
किञ्चिच्चित्ते प्रकुरु करुणां पाहि दीनं स्वबाल-
मेतत्ते वै किमपि कठिनं नास्ति विश्वम्भरायाः ॥ ९३ ॥
केचित्पुत्रास्तव गुणयुता दोषयुक्ताश्च केचित्
केचिच्चैवोभयविरहिताः केचनैवोभयाढ्याः ।
वैषम्यं ते न हि गिरिसुते ! तेषु सर्वेषु योग्यं
वात्सल्यात्तद्गुणविरहिते मय्यतोऽस्ति ब्रुवेऽहम् ॥ ९४ ॥
कालक्षेपं न हि कुरु शरन्मेघवन्मेघवर्णे !
प्रावृण्मेघप्रतिममभितः शर्मवर्षं प्रवर्ष ।
विस्तार्यास्यं त्रिचतुरपृषद्वाञ्छयेवेक्षमाणे
सारङ्गे मय्यणुवसुतृषा पाणियुग्मं प्रसार्य ॥ ९५ ॥
मातः ! कालि ! प्रकटवदने ! चण्डिके ! देवि ! दुर्गे !
सौख्यं दुःखाच्चरणभजनं मौख्यर्यमारोग्यमोजः ।
देहि त्रायस्व भवतु हराऽऽपादयोद्धर्षयाशु
वारं वारं चरणशरणीभूय याचे बतैतत् ॥ ९६ ॥

धाता नाहं तव नुतिकृते नापि वल्मीकजन्मा
व्यासो नाहं न हि वररुचिः कालिदासोऽपि नाहम् ।
तस्मादेषा मम जडमतेर्युक्तिहीनापि चोक्तिः
कर्णे कार्या भवतु सफला सा यथा प्रार्थयेऽहम् ॥ ९७ ॥

दुःखाद् यद्यद् भणितमसकृन्नीचमुच्चं वचो मे
श्रुत्वा क्षान्त्वा जननि ! दयया तर्णकस्येव तूर्णम् ।
दुःखध्वस्तिर्निजचरणयोर्भक्तिरव्याजभावा
भाव्या चैतन्मदभिलषितं नो किमप्यस्त्यतोऽन्यत् ॥ ९८ ॥

विश्वोत्पत्तौ कलितरजसे पद्मजायै नमस्ते
सत्त्वस्थायै त्रिजगदवने शारदायै नमस्ते ।
तत्संहारे विपुलतमसे कालिकायै नमस्ते
सर्वातीतत्रिगुणरहितानन्तशक्त्यै नमस्ते ॥ ९९ ॥

लोके नानाविधरुचिवशात् त्वां हि नानास्वरूपां
सेवन्तेऽन्यन्न हि किमु परं त्वां विना सर्वरूपे ! ।
पुंरूपापि त्वमसि जननि ! क्लीबरूपा त्वमेव
स्त्रीरूपापि त्वमिह जयसि त्वं मनोवागतीता ॥ १०० ॥

लोके धर्माधिकृतिविदितः कृष्णशर्मा द्विजन्मा
स्तोतुं शक्तेरपि विरहतोऽसङ्ख्यताया गुणानाम् ।
बिन्दुर्वार्धेरिव गुणकणं प्राप्य भक्त्या प्रणुन्नो
मन्दाक्रान्ताशतकमकरोत् कालिकाप्रीतिहेतोः ॥ १०१ ॥

इति श्रीधर्माधिकारिकृष्णपन्तपण्डितविरचितः
श्रीकालिकाया मन्दाक्रान्ताशतकस्तवराजः
सम्पूर्तिमगमत् ।

॥ शुभाय भूयात् ॥

॥ श्रीः ॥

श्रीवेणीरामपण्डितधर्माधिकारिविरचितम्

# धर्माधिकारिवंशवर्णनम् ।

धर्माधिकारिवंशस्य वर्णनं निजशक्तितः ।
कुरुते साम्बमानम्य श्रीवेणीरामपण्डितः ॥ १ ॥

आसीद् यामादिशि प्रसिद्धविबुधैः संसेवितं सर्वदा
क्षोणीशेश्वरपत्तनं दिशि दिशि ख्यातं रमामण्डितम् ।
यत्तद् बेदरनामकं पथिकरुक्संहारकं कारकं
सौख्यादेर्भुवि मण्डनं निवसतां दोषस्य सङ्खण्डनम् ॥ २ ॥

स्वर्धुनीव मनुजान्पुनाति या निम्नगा हि खलु तत्र काप्यभूत् ।
यज्जलैरवभृथो विधीयते याज्ञिकैर्विविधयज्ञकर्मसु ॥ ३ ॥

वापीकूपतडागजीवनगुणैः सञ्जीवनं पक्षिणां
कह्लारोत्पलगन्धबद्धहृदया यत्र द्विरेफावली ।
भ्राम्यद्भृङ्गवने निकुञ्जभवने मेघागमे ताण्डवं
मायूरं शुकसारिकाकलकलस्तत्तद्गृहे सम्भ्रमः ॥ ४ ॥

बृहत्कपाटार्गलशृङ्खलैस्तद् द्वारैश्चतुर्दिक्षु चतुर्भिरेव ।
संशोभितं चत्वरवीथिरथ्याचैत्यादिभिः श्रीनगरं बभूव ॥ ५ ॥

यत्प्रासादसुशोभितानि शिखराण्यासन् सदा मेरुणा
स्पर्धन्ते शशिना तथा दिनकृता प्रोत्तुङ्गतागर्वतः ।
कामिन्यः परमोहयन्ति मनुजान्नेत्रप्रकाशच्छलै-
र्द्वारि द्वारि सुवर्णपूर्णकलशा दध्यक्षतैः पूजिताः ॥ ६ ॥

वर्णाश्चत्वार आसन्नुचितनिजकुलाचारधर्मान एव
स्वां स्वामाजीविकां तामतिनिपुणधिया तत्र सर्वे प्रचक्रुः ।

नो दीनः कोऽपि हीनः क्वचिदपि च पुनर्भोजनाच्छादनाद्यै-
श्चित्रैः पुत्रैः कलत्रैस्तदिह निवसतां मानसं पूर्णमासीत् ॥७॥
शास्त्रार्थेषु प्रवीणाः श्रुतिवचनगुणैः पूर्णचित्ताः पुमांसो
विप्रा वै दाक्षिणात्याः शिवचरणरता दीक्षिताः प्रायशो ये ।
आवासं ते प्रचक्रुर्भुवि सुखनिकरे पत्तने तत्र सर्वे
ध्यायन्तो ब्रह्म सूक्ष्मं श्रुतिगणगदितं स्वप्रकाशं नितान्तम् ॥८॥
तत्रासीद् द्विजपुङ्गवः श्रुतिधरो **लक्ष्मीधरः** पण्डितो
विख्यातो भुवि वेदशास्त्रमथितार्थानां समालोचकः ।
श्रीमन्मुद्गलगोत्रजः प्रवरवानेभिस्त्रिभिश्चर्षिभि-
स्तेषामाङ्गिरसो ह्यभूत्प्रथमजो भार्म्याश्वसंज्ञः परः ॥ ९ ॥
मौद्गल्यश्च तथा तृतीयक ऋषिः सत्संसदामग्रणीः
प्राज्ञो यः स्वयमाश्वलायनधृतामृग्वेदशाखां श्रयन् ।
तस्मिन् पत्तनके सभापतिरभूद्दिल्लीश्वराज्ञावशा-
त्तन्मुद्राङ्कितताम्रपट्टफलकं लब्ध्वा स्वविद्याबलात् ॥ १० ॥
श्रीमच्छेदरवासिविप्रनिखिलाचारप्रधर्मास्थितौ
तत्तद्ब्राह्मणपुङ्गवैरधिकृतो **लक्ष्मीधरः** पण्डितः ।
धर्माणामधिकारवानयमभूत्तेनोपनाम्ना क्षितौ
ख्यातः सर्वदिशि प्रसिद्धसुधियामग्रेसरः केसरी ॥ ११ ॥
व्यवहारविनिर्णयं सदा निजमुद्राङ्कितपत्रदानतः ।
स्मृतिशास्त्रविचारतः सुधीः सुधियां सौख्यकरं चकार सः ॥१२॥
लिपिं तां पैशाचीं परिलिखति नित्यं व्यवहृतौ
श्रुतीनां तात्पर्यं परिकलयति स्वेन मनसा ।
स्मृतौ यद्येनोक्तं तदिदमयमालोच्य निजया
धिया युक्तं चक्रे रघुवरपदद्वन्द्वनिरतः ॥ १३ ॥
उपास्यः श्रीरामो जनिरपि महाराष्ट्रककुले
कुले पूज्या देवी किल परशुरामस्य जननी ।

भप्यौ कालेऽन्यस्मिन् यदि भवति रामोत्सवदिनं
तदार्चादीन् कृत्वा निजविभवदानान्यपि ददौ ॥ १४ ॥
जनेर्धरित्री'दिशि दक्षिणस्यां श्रीबेदरे पत्तनकेऽखिलार्थे ।
पूज्या कुले तस्य बभूव देवी सा रेणुका सर्वपदार्थदात्री ॥१५॥
सोऽयं धर्माधिकारी द्विजकुलतिलकः क्ष्मापतेः प्रीतिपात्र-
मावासं तत्र कृत्वा स्वधिकृतिविषयं संप्रचक्रे प्रयत्नात् ।
पुत्री मित्री कलत्री द्रविणपशुगणैः पूर्णतां प्राप्तवान् सन्
तत्रस्थानां जनानां निजगुणविभवै रञ्जयन्मानसानि ॥१६॥
श्रीकृष्णोऽस्य सुतोऽभवत्प्रथमतो गोविन्दशर्माऽपर-
स्तस्याभूदनुजस्ततोऽपि कुशली, लक्ष्मीधरस्यात्मजौ ।
प्रज्ञायां गुरुणा समौ धरणिवत् क्षान्तौ पवित्रौ परौ
गाम्भीर्ये तु समुद्रवत् प्रकटितौ विद्वत्सभापूजितौ ॥ १७ ॥
लक्ष्मीधरादपि गुणैरधिकौ पृथिव्यां
ख्यातौ तदीयतनयौ दिशि दक्षिणस्याम् ।
ज्येष्ठस्य सूनुरभवत्स महीपतिर्वै
जाते हि तस्य जनकः परलोकमाप ॥ १८ ॥
महीपतेः पण्डितवंशदीपो गोविन्दशर्मा प्रथितः पितृव्यः ।
भ्रातुः परां तां गतिमाकलय्य काश्यां निवासाय मनश्चकार ॥ १९ ॥
तं भ्रातृपुत्रं तरसा गृहीत्वा गोविन्दशर्मा खलु तीर्थवासम् ।
विधातुमाराच्छिवराजधानीं वाराणसीं प्राप बुधाग्रवर्यः ॥ २० ॥
विहाय पुत्रान् गुणतोऽधिकान् स्वान् श्रीबेदरे भ्रातृसुतं गृहीत्वा ।
ज्येष्ठस्य बन्धोस्तनयस्य तस्य यज्ञोपवीतं त्वरया चकार ॥ २१ ॥
अनित्यमेतज्जरया विजीर्णं वपुर्मदीयं किल शाश्वतं न ।
बुद्ध्वैवमेवं प्रचकार मौञ्जीं चतुस्समस्यैव महीपतेः सः ॥ २२ ॥
वैवाहिकं कर्म चकार तस्य तं पाठयामास महीपतिं सः ।
भ्रातुः परस्नेहवशाच्छिशुं तं मेने स्वपुत्रादधिकं द्विजाग्र्यः ॥२३॥

मुद्रापात्राधिकारादिकमपि निखिलं यत्स्थितं बेदरे तत्
सर्वं काशीनिवासिद्विजवरनिकरैरर्थयित्वा प्रदत्तम् ।
क्षोणीशाज्ञाबलेन प्रचुरमपि निजं स्वाधिकारं हि काश्यां
लब्ध्वा नव्यं महेशस्मरणबलवशात्तत्र वासं चकार ॥ २४ ॥
महतां न च दुस्त्यजं हि किञ्चित् स्वसुतादीनपहाय दक्षिणस्याम् ।
निजबन्धुसुतं शिशुं गृहीत्वा वसतिस्तस्य बभूव शम्भुपुर्याम् ॥ २५ ॥
गोविन्दपण्डितसुता दिशि दक्षिणस्यां
ये वै स्थिता न पुनरत्र समागतास्ते ।
तेषां तु वंशविभवः खलु बेदरे वै
षण्णां बभूव न हि तं प्रविचारयामः ॥२६॥
महीपतिः पण्डितवंशवर्यो धर्माधिकारी किल काशिपुर्याम् ।
वंशस्तदीयः प्रचुरं बभूव काश्यां प्रसिद्धः पृथिवीतलेऽस्मिन् ॥२७॥
महीपतेः शङ्करपण्डितो वै पुत्रो ह्यभूच्छङ्कर एव साक्षात् ।
अनन्तशर्मा ह्यनुजस्तदीयः पुत्राविमौ पण्डितवंशवर्यौ ॥ २८ ॥
जातः शङ्करपण्डितस्य तनयः श्रीविश्वनाथः कृती
तस्यानन्तसुतस्ततोऽपि मतिमान् ख्यातः क्षितौ सर्वदा ।
तस्याभूत्तनयो गदाधरबुधः शास्त्रज्ञ एकः कवि-
स्स्वल्पायुः स ततः समाप्तिमगमद्वंशोऽखिलः शाङ्करः ॥२९॥
वंशोऽनन्तबुधस्य विस्तृतिमगात्पुत्रैस्त्रिभिस्ते त्रयः
कृष्णो ज्येष्ठसुतः समस्तधिषणालङ्कारचूडामणिः ।
तस्याभूदनुजस्ततोऽपि कुशली रामाख्य एकः सुधी
विख्यातो वसुधातले हि विदुषां मध्ये स वाचस्पतिः ॥३०॥
तस्याभूदनुजो गणेश इति वै पुत्रास्त्रयः कीर्तिताः
कृष्णस्याप्यभवत्सुतः सुमतिमान् नारायणः पण्डितः ।
यो रामादनुजो गणेश इति तत्पुत्रावपि द्वौ मतौ
बालोपण्डितनामकः प्रथमजस्तस्यानुजो माधवः ॥३१॥

बालोपण्डितनामकस्य तनयः काह्नी तथा वामनो
रामस्याप्यभवँस्त्रयः खलु सुताः प्रख्यातकीर्तिं गताः ।
गोविन्दः प्रथमोऽनुजोऽस्य समभूच्छ्रीवासुदेवः कृती
नन्दोऽभूदवरस्ततः क्षितितले यद्वंशजाता वयम् ॥ ३२ ॥
क्षोणीशाश्रयणाभिजेष्टतरणेर्व्यक्तं परं सेवना-
द्विश्वेशस्य कृपाकटाक्षविभवान्नन्दः सतामग्रणीः ।
शास्त्रस्यापि बलेन लौकिकधिया मुद्राङ्कितात्पत्रतः
श्रीकाश्यां पुनरुज्जहार गिलितं धर्माधिकारं परैः ॥ ३३ ॥
कृत्स्नक्ष्मातलवर्तिपण्डितजनालङ्कारचूडामणिः
श्रीनन्दः सुकृती कुलैकतिलको वागीश एवापरः ।
श्रीमद्विष्णुपराशरोक्तवचसां टीकां चकार स्वयं
धर्माचार्य इति प्रसिद्धिमगमच्छ्रीधर्मशास्त्रे कृती ॥ ३४ ॥
षट्शास्त्रेषु विशारदः श्रुतिवचो व्याख्याय बुद्ध्या तु यो
विज्ञानेश्वरवत्प्रवर्तक इह स्मृत्युक्तवाक्येष्वयम् ।
को जातो ह्यवतार एष हि गुरोर्व्यासस्य वा सर्वथा
काव्यादींश्च तथा परोपकृतये ग्रन्थान् न्यबध्नाद् बहून् ॥ ३५ ॥
न जातः कुलेऽस्मिन् कदाचित्तु कश्चिन्न वा सम्भवेदेवमेवापरोऽपि ।
महाराजपूज्यः प्रतापी द्विजन्मा कृती नन्दशर्मा स्वकीर्तिं ततान ॥ ३६ ॥
सभामण्डनं भूषणं काशिवासिद्विजानामयं खण्डनं पापजातेः ।
परं दण्डनं न्यायदर्शिस्वरीत्या महाराजसंसत्सु वक्ताऽद्वितीयः ॥ ३७ ॥
प्रयागे यदा स्वामिकाज्ञाबलेन त्रिवेण्यां महाविष्णुमूर्तित्रयं सः ।
परं लब्धवांस्तद्दिनात्सम्प्रचक्रे स्वयं नन्दसूनोर्जनेरुत्सवं वै ॥ ३८ ॥
जन्माष्टम्या उत्सवं वार्षिकं तं कुर्मः सर्वे तत्कुलेऽस्मिन्प्रसूताः ।
पूर्वं रामस्तद्दिनात्कृष्णवर्मा जातावेतौ तत्कुलोपास्यदेवौ ॥ ३९ ॥
नाम्नाऽपरेण तु विनायक एष एव
श्रीनन्दपण्डित इति प्रथितः पृथिव्याम् ।

यद्वंशजन्मविभवादवनितलेऽस्मिन्
मन्दाः सुमन्दमतयोऽपि वयं हि मान्याः ॥ ४० ॥
यदैव शास्त्रार्थविचारकारी दृष्टो न लोकैस्त्रिपुरारिपुर्याम् ।
धर्मप्रवृत्तिं प्रविधातुमारान्नन्दस्तदानन्दकरो बभूव ॥ ४१ ॥
यदैव समुपाहृता निजकुलीनवृत्तिः परैः
कलेः प्रबलवैभवाच्छिवपुरे न धर्मस्थितिः ।
तदैव समभूत् क्षितौ निखिलशास्त्रमूर्तिः स्वयं
निशाकर इव द्विजेष्वपि ततान मोदं द्रुतम् ॥ ४२ ॥
पद्मासनेन भणितं वचनं निशम्य
नन्दोऽभिवन्द्य विधिमाशु ततोऽवतीर्य ।
प्रादुर्बभूव सवितेव हि शम्भुपुर्यां
लोकान्स्वधर्मकरणे विनियोक्तुमारात् ॥ ४३ ॥
धर्मस्य संस्थापनमेव कर्तुं हरिर्यथायं शिवराजधान्याम् ।
प्रादुर्बभूवाखिलपुण्यराशिर्नन्दः सतां सत्पथसंप्रदर्शी ॥ ४४ ॥
मण्डितो द्विजसभासु संबभौ नन्दपण्डितशिरोमणिर्यदा ।
दण्डिता दुरितभागिनस्तदा खण्डितं स्मृतिवचोविरोधि यत् ॥४५॥
गतवति धर्मेऽधर्मे स्थितवति धात्रा समाज्ञप्तः ।
नन्दः समुचितधर्मं वर्णानां स्थापयामास ॥ ४६ ॥
दुरिततमो विनिहन्तुं जातो मार्तण्ड एव भुवि नन्दः ।
वचनांशुभिः प्रकाशं चक्रेऽसौ पण्डितः साक्षात् ॥ ४७ ॥
मतकर्ता बुधभर्ता पातकहर्ता हरिस्मर्ता ।
जातः स्मरहरपुर्यां रामकुमारः परं नन्दः ॥ ४८ ॥
पुरतो धावति वाणी वेणी यस्य द्रुतं कुरुते ।
मङ्गलमनिशं, धर्मश्रेणीभूतः स नन्दोऽभूत् ॥ ४९ ॥
बहवः स्मृतिवचनानां व्याख्यातारः पुरातना जाताः ।
नन्दकृता तद्विवृतिश्चमत्कृता सा पुनर्जयति ॥ ५० ॥

गतजन्मनि विपुलतरं पुण्यं किं वा मयाचरितम् ।
यद्विभवान्मम जन्म श्लाघ्यं नन्दान्वये जातम् ॥ ५१ ॥
हर हर शिव शिव जातं नन्दकुले जन्म मे व्यर्थम् ।
तद्गुणलेशावाप्तिर्नाभूद् यस्मान्मम व्यक्ता ॥ ५२ ॥
द्विजवरतिलको जातः पूर्वो नन्दोऽप्यपूर्वोऽयम् ।
धन्यो यत्कुलजन्मप्रतापतो लोकपूज्योऽहम् ॥ ५३ ॥
धन्यो धन्यतरोऽहं बुधजनमान्यः क्षितौ जातः ।
नन्दान्वयभवजन्मप्रतापतः सर्वदा गण्यः ॥ ५४ ॥
प्रदीपवर्तिर्ज्वलिता तमांसि व्यनाशयत्स्नेहवशाद्यथैव ।
नन्दस्तथा सर्वजनार्तिहारी प्रतापतः स्नेहबलेन चैव ॥ ५५ ॥
तारितं निजकुलं स्वशक्तितः स्मारिता वचनतः स्वधर्मता ।
कारितं स्मृतिवचोऽनुरोधि यद् वारितं द्रुतमनेन पातकम् ॥ ५६ ॥
मारिता प्रबलविघ्नतामुना नीतिशास्त्रविभवेन हारिता ।
काप्यनीतिरिह गर्विता क्षितौ पातकप्रचुरता निवारिता ॥ ५७ ॥
महाम्भोधिपारं गता यस्य कीर्तिः स्थिता मानसे सर्वदा कृष्णमूर्तिः ।
गुणानामसङ्ख्यातकानां प्रपूर्तिः परानन्दसंस्फूर्तिभूतो हि नन्दः ५८॥
अमीषामेषेयं परमविदुषां सौख्यलहरी
कृतिर्विद्वद्भूषा स्मृतिविवृतिरूपा विजयते ।
यदीया श्रीस्तस्मिन् द्विजगणमणौ पूर्वजपदे
परानन्दे नन्दे मम भवतु भक्तिः सुखकरी ॥ ५९ ॥
मया नन्दशर्मा द्विजन्मा सुकर्मा स्वधर्मप्रवक्ता महाविष्णुभक्तः ।
सुधर्मापतेः श्रीगुरोर्यत्सभायाः पतिः पण्डितानां परं वर्णितः सः॥६०॥
वर्णितः सुधिषणाप्रभावतः श्रीविनायकबुधः स्वपूर्वजः ।
नन्दपण्डित इति प्रसिद्धतां योऽगमत् क्षितितले द्विजाग्रणीः ॥६१॥
पुत्रोऽभवत्तस्य हि कृष्णशर्मा प्रतापशाली विबुधाग्रणीः सः ।
साहित्यशास्त्रैकपरायणोऽपि स्मृत्युक्तकर्म प्रकटीकरोति ॥ ६२ ॥

कुण्डमण्डपविधौ प्रगल्भतां प्राप्त एष विदुषां पुरःसरः ।
धर्मशास्त्रवचनार्थपारगो दुष्टदण्डनपटुर्भटः स्वयम् ॥ ६३ ॥
न तस्य पुत्रः समभूत्कथञ्चिद् वंशस्तदीयो न बभूव तस्मात् ।
तस्यानुजस्यैव हि वंशजातं जातं विचित्रं परमं पवित्रम् ॥ ६४ ॥
**वेणीदत्तो** द्विजाग्र्यः स्मृतिपठनरुचिर्धर्मशास्त्रस्य वक्ता
ग्रन्थानां चापि कर्ता पितृवदिह गुणैर्नन्दसूनुर्द्वितीयः ।
सौन्दर्ये कामदेवः पितृचरणरतः क्ष्मापतेः प्रीतिकारी
ह्याह्लादे शीतरश्मिर्वितरणविषये किं दधीचिर्बभूव ॥ ६५ ॥
'अमुं यदा मन्त्रबलात्पुमांसं संमोचयिष्ये मम जीवनं न ।
तदे'ति विज्ञाय तथापि धीरः परोपकाराय मतिं चकार ॥ ६० ॥
संमोचयामास नरं तु कञ्चिन्मृत्योर्यदासौ निजमन्त्रयोगात् ।
तदैव पञ्चत्वमवाप पित्रा निवारितोऽपि स्वमृतेर्वशः सन् ॥ ६७ ॥
तदुत्तरं पालयति स्म पञ्चवर्षं शिशुं तत्तनयं हि **नन्दः** ।
पुत्रस्य शोकं प्रविहाय धैर्यात्पौत्रं निजं तातसमं गुणौघैः ॥ ६८ ॥
**गोपीनाथं** स्वसुततनयं पालयित्वा हि **नन्दो**
मौञ्जीं बद्ध्वा स्वविभवबलात्कर्म वैवाहिकं च ।
कृत्वाऽध्याप्याखिलमुनिमतं शास्त्रजातं यथाव-
च्छम्भुं स्मृत्वा परमपदवीमाप सर्वं विहाय ॥ ६९ ॥
**गोपीनाथो** गुणाढ्यः स परमकुशली पण्डितेष्वग्रगण्यः
कृष्णं स्मृत्वा बभूव प्रतिदिवसमसौ धर्मशास्त्रस्य वक्ता ।
मीमांसासूत्रभाष्यप्रवचननिरतस्तस्य पुत्रास्त्रयोऽपि
**श्रीकृष्णो** ज्येष्ठ एकस्तदनु समभवद् **ढुण्ढिराजः** प्रवीणः ७०
तस्याभूदनुजः कविर्गुणनिधिः **श्रीनीलकण्ठा**भिधः
स्वान्ते सर्वमिदं ह्यलीकमिव वै निश्चित्य बुद्धया स्वयम् ।
**गोपीनाथबुधो** विहाय सदनं श्रीनीलकण्ठं शिशुं
प्रेम्णाऽऽदाय सुखेन वासमकरोल्लोलार्कभूमौ सदा ॥ ७१ ॥

गार्हस्थ्यभारं सुतयोर्विधाय स्वयं पवित्रः परमस्तपस्वी ।
असीसमीपे वयसोऽवशेषं लोलार्कतीर्थे खलु नीतवान् सः ॥७२॥
पपाठ पाठ्यं निखिलं हि शास्त्रं मनुष्यशृङ्गारविधिं विहाय ।
श्रीगद्यपद्यानि परस्य पुंसः संस्तावकानि प्रचकार भक्त्या ॥ ७३ ॥
प्रह्लादनारदपराशरवत् प्रभक्तः
श्रीकृष्णपादकमलद्वयमात्रसेवी ।
सन्तारितं कुलमनेन निजं स्ववृत्त्या
धन्योऽहमेव मम वै प्रपितामहोऽसौ ॥ ७४ ॥
ताते गते मुक्तिपदं पवित्रः श्रीनीलकण्ठस्तनयस्तृतीयः ।
संन्यासमेव प्रचकार शीघ्रं बालोऽपि दारान्मनसाऽविचिन्त्य ॥ ७५ ॥
अभावाद्विवाहस्य जातो न वंशः परं नीलकण्ठस्य धीरस्य पुंसः ।
सुतौ द्वौ मतौ यौ पुरा सम्प्रगीतौ तयोर्वंश एष प्रसिद्धिं जगाम॥७६॥
जडभरतवदेव स्वां तनुं यो बिभर्ति
क्वचिदपि न विषादो मन्यतेऽनेन चित्ते ।
नृहरिचरणभक्तः कृष्णशर्मा द्विजानां
कुलतिलक इवाभूत्पुण्यकीर्तिस्तपस्वी ॥ ७७ ॥
कलाधरस्तस्य सुतः पिता मे यो धर्मशास्त्रार्थविचारदक्षः ।
संस्कारकर्मस्वपि स प्रवीणः साहित्यशास्त्रे परिनिष्ठितोऽभूत् ॥७८॥
अल्पायुस्तु सदाशिवः समभवत्तस्यानुजः क्ष्मातले
योऽसौ बालक एव शास्त्रपदवीमालम्बितः सुष्ठुधीः ।
कालोपण्डितनामकस्य समभूत्तस्यैव सूनुः कृती
वेणीरामबुधः प्रसिद्धधिषणारामः शिवाकिङ्करः ॥ ७९ ॥
अल्पायुषस्तस्य न नाम वंशः कलाधरस्यैव सुतः प्रसिद्धः ।
शास्त्रार्थवक्ता सुनिबन्धकर्ता भक्तः शिवायाः स बभूव लोके ॥८०॥
अधिकरणं सहस्रं यो हि निर्वक्ति नित्यं
स्मृतिवचनसहस्राण्याशु वक्ता सभायाम् ।

हरिचरणरतः सन्नग्निहोत्रादिकर्ता
बुधजनतरणिर्मे पूर्वजो ढुण्ढिराजः ॥ ८१ ॥
तस्याभवन् पञ्च सुताः प्रतापिनः पाण्डोस्तनूजा इव ते यशस्विनः ।
धर्माधिकारं स्वधिया प्रचक्रिरे प्रत्येकतः शास्त्रविचारकोविदाः ॥८२॥
नन्दोऽभूत्प्रथमं ततः पुनरभूच्छ्रीमाननन्तः सुधी-
स्तस्यासीदनुजो हरिस्तदनुजो नारायणः पण्डितः ।
तस्याभूदनुजस्ततोऽपि कुशली श्रीरामकृष्णाभिध-
स्तेषां वंशततिः प्रसिद्धिमगमत्काश्यां महाविस्तृता ॥८३॥
गोपीनाथबुधः सुतः समभवन्नन्दस्य तस्यानुज-
स्यानन्तस्य सुतो बभूव मतिमान् लक्ष्मीधरः पण्डितः ।
पुत्रौ द्वौ हरिपण्डितस्य कुशलौ श्रीबालकृष्णोऽग्रज-
स्तस्याभूदनुजस्ततश्च स महीपत्याख्य एकः सुधीः॥८४॥
श्रीनारायणपण्डितस्य तनयः ख्यातो धरामण्डले
नाम्नाऽसौ रघुरेव दत्तकविधिं कृत्वा तु योऽङ्गीकृतः ।
पुत्रौ द्वौ भुवि रामकृष्णतनयौ विद्वत्सभामण्डनौ
तस्याभूच्छिवरामपण्डित इति श्रेष्ठो गुणैर्जन्मना ॥८५॥
तस्याभूदनुजः कृती बुधवरः श्रीरामचन्द्राभिधः
सर्वस्मादधिको गुणैस्तु वयसा ख्यातः कनीयानयम् ।
श्रीमन्नन्दसुतादिवर्णनमभूदित्थं पुनस्तत्सुता-
दीनां सुष्ठुधियां सुखैकसदनं कार्यं परं वर्णनम् ॥ ८६ ॥
नन्दादयः पञ्च सुताः प्रसिद्धाः श्रीढुण्ढिराजाख्यबुधस्य पूर्वम् ।
प्रोक्ता भविष्यन्ति पुनः सुता वै तेषां तदा वर्णनमेव कार्यम् ॥८७॥
तत्पुत्रपुत्रा न मयाऽनुवर्णितास्तेषां पुनः श्रीरमणस्य सेवया ।
केनापि पुंसा करणीयमाशु तत्सतां मनःसौख्यकरं हि वर्णनम् ॥८८॥
नन्दान्वयो निपुणया हि गिरा मयाऽसौ
संवर्णितः शिवपदद्वयसेवनेन ।

यस्यान्वये मम पितुः पितुरेव जन्म
जातं ममापि कविभूषणकूटवर्ये ॥ ८९ ॥
नन्दपण्डितसुतान्वयो मया वर्णितो निपुणया धिया परम् ।
भाट्टसम्मतमतप्रकाशकास्तार्किका अपि नरा यदन्वये ॥ ९० ॥
केचिद्वेदविदः स्मृतौ सुकुशलाः केचिच्च तर्कागम-
ग्रन्थप्रौढिरतास्तु केचन पुनर्मीमांसकाः केचन ।
साहित्यार्थविशारदाः कविवरा जाता यदीयान्वये
नन्दोऽसौ मम पूर्वजो गुणनिधिर्धन्यो बुधैः कीर्तितः ॥९१॥
श्रीरामस्य तनूजनिः सुविदितः शास्त्रेषु पारङ्गत-
श्चक्रे ज्यौतिषिके निबन्धरचनां गोविन्दशर्मा द्विजः ।
वक्ताऽष्टादशसङ्ख्यकस्मृतिवचःसारं परं धीमता-
मग्रे पूज्यतमः पुरारिपुरभूर्नन्दात्मजः संबभौ ॥ ९२ ॥
अष्टादशस्मृतिवचांसि विचार्य नित्यं
गोविन्दपण्डितवरः समुदाजहार ।
श्रीराजसंसदि यथोचितधर्ममेकं
येन स्वकर्मनिरतः सकलो जनोऽभूत् ॥ ९३ ॥
भूपालपूज्यपादः पादाक्रान्ता कृता येन ।
विद्वत्प्रतापराजी तरणिर्मे पूर्वजः सोऽभूत् ॥ ९४ ॥
शास्त्रार्थवादशाली व्यालीवत्पापनाशोऽयम् ।
नृपजनमनोऽनुशीली नन्दोऽन्योऽभून्मम प्राच्यः ॥ ९५ ॥
विद्वत्कदम्बनीपो मौरूर्यध्वान्तप्रदीपोऽयम् ।
यूपाकृतिः सभायां गोविन्दाख्यः क्षितौ जातः ॥ ९६ ॥
द्विजवरभूषाहीरः कीरः किं वचनरचनायाम् ।
धीरो रामतनूजो गोविन्दाख्यः पुरे शम्भोः ॥ ९७ ॥
विद्वन्मण्डलचन्द्रः कीर्तिश्चान्द्रीव यस्य सुव्यक्ता ।
गोविन्दपन्तनामा भामाजानेः परं भक्तः ॥ ९८ ॥

विद्वन्मण्डलतरणिस्तरणिरिवाऽऽप प्रकाशतां यस्तु ।
कीर्तिर्यस्य बभूव श्रीगोविन्दः कुले महति ॥ ९९ ॥
त्रिभुवनसुगीतकीर्तिः स्फूर्तिरभूद्यस्य सकलविद्यासु ।
गोविन्दमूर्तिरेषा पूर्तिः स्वानन्दलहरीणाम् ॥ १०० ॥
विद्वद्भूषामुकुटं मुकुटं यस्यैव पादकमले च ।
नृपतीनां यदमन्दं भूयो निस्पन्दते स मे पूर्वः ॥ १०१ ॥
विद्वन्मण्डलतिलकस्तिलकाकारः कृतो येन ।
वंशो निजः स मेऽभूद् गोविन्दाख्यो वरः प्राच्यः ॥१०२॥
दृष्टमपूर्वैः पूर्वैरपूर्वमिव पूर्वसञ्जातम् ।
श्रीरामसिन्धुरत्नं गोविन्दाख्यं परं मन्ये ॥ १०३ ॥
रामात्मजं परं तं गोविन्दाख्यं सुधीन्द्रजनसेव्यम् ।
पूज्यं लोकत्रितये जानीमः पूर्वजं स्वीयम् ॥ १०४ ॥
श्रीमन्नन्दवरिष्ठः श्रेष्ठः ख्यातश्च विबुधनिकरेषु ।
गोविन्दपन्तसंज्ञः प्रेष्ठः श्रीरामविबुधस्य ॥ १०५ ॥
शास्त्रार्थसारवक्ता गोप्ता स्वीयस्य पापसंहर्ता ।
श्रीमद्रामकुमारो गोविन्दोऽभून्मम प्राच्यः ॥ १०६ ॥
विश्वेश्वरस्य राज्ये न्यायाधीशः सभायां सः ।
अष्टसचिवाग्रगण्यो गोविन्दाख्यः परं जातः ॥ १०७ ॥
विज्ञानेश्वरगदितं वादिनि विषये विनिर्णयं चक्रे ।
गोविन्दपन्तसंज्ञः श्रीमन्नन्दात्मजः सोऽभूत् ॥ १०८ ॥
मुद्राङ्कितं तु पत्रं वादिभ्यः प्राप्तभागेभ्यः ।
न्यायेन रामसूनुर्गोविन्दः सन्ददौ पूज्यः ॥ १०९ ॥
गोविन्दमन्त्रजापी वापीवत्तापसंहारी ।
तापीव सुप्रतापी गोविन्दोऽयं सुधापी किम् ॥ ११० ॥
नन्दात्मजो द्विजन्मा नाम्ना गोविन्दपन्तोऽयम् ।
धाम्नः परममहिम्नां भूम्नः क्षोणीशतुल्योऽभूत् ॥ १११ ॥

रामद्रुमपरिषक्ता मुक्ताराजीव या युक्ता ।
गोविन्दकल्पलतिका मम भूयात्सा शिवायैव ॥ ११२ ॥
रामपयोनिधिजातः ख्यातो गोविन्दचन्द्रोऽयम् ।
वचनांशुभिः स्वकीयैर्मोदं काशीनिवासिनां चक्रे ॥ ११३ ॥
प्राचीनपुण्यकर्मस्वाचरणेनेह हरिहरस्मरणात् ।
रामात्मजः परोऽभूद् गोविन्दाख्यः क्षितौ पूज्यः ॥११४॥
दुरितनिवारणकारणतारणशम्भोः प्रसादेन ।
नन्दाग्रजः स्वशक्त्या गोविन्दो वर्णितः पूर्वः ॥ ११५ ॥
विदुषां गणनासु पूर्वगण्यौ निपुणौ रामसुताविमावभूताम् ।
समभूद् विपुलस्तयोः सुतानां सुखदो वंशवरः प्रतापशाली ॥११६॥
गोविन्दनन्दौ तनयौ प्रसिद्धौ श्रीरामसंज्ञस्य बुधस्य लोके ।
वंशस्तयोरेव बभूव वर्यः ख्यातो विचित्रः परमः पवित्रः ॥११७॥
तत्र स्वपूर्वस्य हि नन्दशर्मणो वंशः समासेन मयाऽनुवर्णितः ।
गोविन्दसंज्ञस्य तदग्रजस्य वै संवर्ण्यते वंशवरः स्वशक्तितः ॥११८॥
यो रामपण्डितसुतः सुकविः पृथिव्यां
नन्दाग्रजो द्विजकुलैकमणिर्बुधाग्र्यः ।
गोविन्दपण्डित इति प्रथितस्तदीयो
वंशो मया निजधिया खलु वर्ण्यते वै ॥ ११९ ॥
तत्सुतः समभवद् गुणाग्रणीर्मेघनाथविबुधः परं क्षितौ ।
तस्य वै खलु सुतास्त्रयोऽपि ते वेदशास्त्रनिपुणा गुणाकराः ॥१२०॥
तत्रैकस्य सुतास्त्रयः समभवन् गोविन्दसंज्ञस्य वै
यस्य भ्रातृकनीयसः शिवरतस्वान्तस्य विद्वत्प्रभोः ।
श्रीगोविन्दबुधं स्वपूर्वजवरं गोविन्दपौत्रं परं
सर्वेभ्योऽभ्यधिकं गुणैः कुलमणिं तं वर्णयामो वयम् ॥ १२१॥
न्याये व्याकरणेऽपि जैमिनिकृतौ वेदान्तशास्त्रेऽपि च
श्रीसाहित्यविधौ स्मृतावपि तथा प्रत्यक्षवाचस्पतिः ।

श्रीमल्लेखनकार्यके गणपतिर्गोविन्दशर्मा परः
श्रौतस्मार्तविचारसारचतुरो गोविन्दपौत्रो बभौ ॥१२२॥

वदनमहोदधिनामाख्यं ग्रन्थं चक्रे सपादलक्षं सः ।
गोविन्दनन्दबन्धोः पौत्रो गोविन्दशर्मा सः ॥ १२३ ॥

गोविन्दमूर्तिसेवी पौत्रो गोविन्दसंज्ञस्य ।
विद्वत्पूज्यः ख्यातो गोविन्दाख्यः स्वयं साक्षात् ॥ १२४ ॥

तस्याऽन्यस्य तु बालकृष्णसुकवेः ख्यातास्त्रयोऽप्यात्मजाः
श्रीशम्भोश्चरणाब्जसेवनपरा मीमांसकास्तार्किकाः ।
तस्मात्पूर्वभवस्य सम्यगभवच्छ्रीरेश्वरस्यापि वै
श्रीविष्णुस्तनयः सतां सुखकरः क्षीणः सुतस्तस्य सः ॥१२५॥

गोविन्दस्य सुतास्त्रयः समभवन् श्रीविष्णुभक्तौ रताः
सर्वेभ्योऽभ्यधिका गुणैः क्षितितले शास्त्रेषु पारङ्गताः ।
श्रीमच्छङ्करपण्डितः शिवरतः शास्त्रेषु पूर्णो मत-
स्तस्याऽन्यः समभूत्सदाशिवबुधो गोपालसंज्ञः परः १२६

तत्राभूत्तनयः सदाशिवबुधस्याद्यः परं कीर्तिमान्
दीर्घायुर्विबुधाग्रणीर्गुणनिधिर्नाम्ना गणेशः सुधीः ।
योऽभूत् क्ष्मातलवर्तिराजमुकुटे गोपालसिंहान्वये
देशे पूज्यतमो भदावर इति ख्याते सुपुण्योदये ॥१२७॥

स्वाभिमतकार्यकारी ज्ञानेनाज्ञानसंहारी ।
शास्त्राकलनविहारी हर्यनुसारी गणेशोऽयम् ॥ १२८ ॥

विलसति सुधीर्गणेशो विद्वच्चूडामणिः सोऽयम् ।
स्वाज्ञापालं चक्रे राजानं बखतसिंहं यः ॥ १२९ ॥

नाजीवत्तनयस्तु शङ्करबुधस्याभून्न पुत्रस्तथा
गोपालस्य ततः समाप्तिमगमद्भ्रात्रोर्द्वयोः सन्ततिः ।
शास्त्रार्थप्रविचारका गुणप्रियः पुत्रा गणेशस्य वै
विख्याता वसुधातले बुधवराश्चत्वार एवाभवन् ॥ १३० ॥

श्रीवीरेश्वरपण्डितः प्रथमतः श्रीविश्वनाथस्ततो
गोपीनाथबुधस्ततोऽपि रघुनाथोऽभूद् क्रमेण क्षितौ ।
एवं ते हि गणेशपण्डितसुतास्तेषां पुनः सन्ततेः
कर्तव्यं गुणवर्णनं जलधिजाजानेः परं सेवया ॥ १३१ ॥
श्रीबालकृष्णस्य सुतो द्वितीयः श्रीमाधवाख्यस्तु मृतिं जगाम
नाभूत्ततः सन्ततिरेव तस्य द्वयोः पुनर्वंशततिर्बभूव ॥ १३२ ॥
रघुनाथमुकुन्दसंज्ञकौ यावविशिष्टौ तनयौ हि बालकस्य ।
स्मृतिशास्त्रविचारपारगौ तौ भुवि शम्भोः पदचिन्तकौ परस्य ॥१३३॥
स्मरन्मुकुन्दं मनसा मुकुन्दो विद्वत्सुधांशुःप्रथितः पृथिव्याम् ।
मिताक्षराकारवचो विचिन्त्य श्रीराजसंसत्सु यथार्थवक्ता ॥१३४॥
श्रीहर्षः किमु काव्यबन्धनविधौ साहित्यमूर्तिः स्वयं
विद्वन्मौलिमणिर्महानधिकृतः श्रीदण्डनीत्यादिषु ।
श्रीगोपालनृपेण राजमुकुटेनाभूत् स्वदेशे परं
धर्माध्यक्षकुलाग्रणीरयमिति ख्यातो मुकुन्दद्विजः ॥१३५॥
मुचुकुन्दसुखप्रदं मुकुन्दं स मुकुन्दः कुमुदैः समर्च्य वै हि ।
शुभकुन्दविहारिणं स्वभक्त्या परमानन्दमवाप पण्डितेन्द्रः ॥ १३६ ॥
कुन्दकुञ्जविहारिणं सदा श्रीमुकुन्दविबुधः सुरोत्तमम् ।
तं मुकुन्दमभिचिन्त्य भक्तितः शक्तितः सुखमवाप मानसे ॥ १३७ ॥
बालकसूनुः ख्यातः श्रीमान् स मुकुन्दशर्माऽयम् ।
विद्वन्मण्डलपाली किमु वनमाली द्वितीयोऽभूत् ॥ १३८ ॥
सद्भक्तसौख्यकर्ता हर्ता यो दुरिततिमिरस्य ।
चित्ते यस्य मुकुन्दः स मुकुन्दः सत्कुले जातः ॥ १३९ ॥
सच्छिष्यकार्यकर्ता हर्ता शास्त्रार्थसारस्य ॥
वक्ता राजपुरस्ताद्धर्मं सर्वं मुकुन्दो वै ॥ १४० ॥
विद्वन्मानसहंसः ख्याता हंसीव यस्य सत्कीर्तिः ।
धर्माध्यक्षकुलेऽस्मिन् द्विजवरमौलिर्मुकुन्दोऽसौ ॥ १४१ ॥

रघुनाथबुधोऽपि पण्डितः स्मृतिशास्त्रे विबुधेषु मण्डितः ।
सुकविर्मुनिजैमिनेः कृतौ परिषक्तः शिवपादसेवकः ॥ १४२ ॥
द्विजदीधितिरेव यो बभूव क्षितिपालेन सदैव पूजितश्च ।
रघुनाथबुधः कुलैकभूषा शिवपुर्यां समभूत्स पूर्वजोऽयम् ॥ १४३ ॥
रघुनाथपदाब्जसेवकोऽसौ रघुनाथः कुलभूषणं बभूव ।
परराणकवार्तिकादिवार्तामकरोज्जैमिनिसूत्रमूलतो वै ॥१४४॥
मन्त्ररत्नपरराणकादि यद् कण्ठतः खलु चकार वार्तिकम् ।
भाट्टसंमतमतप्रवर्तकः संबभूव रघुनाथपण्डितः ॥ १४५ ॥
पण्डितेषु मणिरेव संबभौ लोकमौर्ख्यतिमिरं व्यनाशयत् ।
नत्यजन् जनविमुक्तिकारिकां काशिकां द्विजजनप्रकाशिकाम्॥१४६॥
हारिकां विविधपापसन्ततेर्दारिकामिव कृतां पुरारिणा ।
सर्वलोकपरितारिकामसौ नत्यजन्निह बभौ बुधाग्रणीः ॥ १४७ ॥

श्रौतादिकर्मकारी हारी स्वाज्ञानतिमिरनिकरस्य ।
श्रीमद्बालकसूनुः श्रीरघुनाथः परं जातः ॥ १४८ ॥

वर्णितौ निपुणया धिया मया श्रीमुकुन्दरघुनाथपण्डितौ ।
सन्ततिं त्विह तयोः स्वशक्तितो वर्णयामि निखिलां यथार्थतः॥१४९॥
पञ्चासंस्तनयाश्चतुर्दिशि पुनः ख्याता मुकुन्दस्य वै
विद्वांसो रघुनाथपण्डितकृतेः पुत्रावपि द्वौ मतौ ।
ज्येष्ठः शम्भुरभूद् गदाधरबुधस्तस्यानुजः सोऽप्यभूत्
शम्भोः श्रीशिवरामपण्डित इति ख्यातः सुतः संबभौ१५०॥
पुत्रः शिष्टवरो गदाधरबुधस्याभूत्परः कीर्तिमान्
स्मार्ताचार्य इव प्रसिद्धिमगमच्छ्रीरङ्गनाथः सुधीः ॥
ये वै पञ्च मुकुन्दपण्डितसुतास्तेषु प्रसिद्धो बभौ
श्रीनारायणपण्डितो द्विजवरः श्रेष्ठो गुणैर्जन्मना ॥१५१॥
तस्याभूदनुजः सतां सुखकरः ख्यातः क्षितौ सर्वदा
गङ्गारामबुधस्ततः समभवच्छ्रीवासुदेवः कृती ।

गङ्गारामसुतस्तु माधव इति ख्यातः परासुर्बभौ
वंशस्तस्य बभूव न क्षितितले योऽल्पायुरेवाभवत् ॥ १५२ ॥
अनन्तरामः खलु वै चतुर्थः पुत्रो मुकुन्दस्य बभूव योग्यः ।
नारायणस्यापि सुतौ प्रसिद्धौ श्रेष्ठौ गुणैः पण्डितवंशवर्यौ ॥ १५३ ॥
एकस्तयोर्ज्येष्ठ इति प्रसिद्धो नागेशसंज्ञः प्रथमस्तनूजः ।
श्रीमान् जगन्नाथ इति द्वितीयो नाम्ना सुतोऽभूद्विबुधस्य तस्य ॥१५४॥
श्रीवासुदेवस्य सुतो बभूव श्रीकृष्णशर्मा सुमतिः कवीन्द्रः ।
कृष्णानुजोऽभूदपरस्तदीयो गोविन्दसंज्ञस्तनयः प्रसिद्धः ॥१५५॥
सुताविमौ पण्डितवंशवर्यौ श्रीवासुदेवस्य बुधेषु वर्यौ ।
अनन्तरामस्य सुता बभूवुस्त्रयः क्षितौ योग्यतमा द्विजाग्र्याः॥१५६॥
श्रीबालकृष्णः प्रथमस्तनूजो हरिर्द्वितीयः प्रबभूव तस्य ।
तस्यानुजः श्रेष्ठतमो गुणौघैः पुत्रस्तृतीयः शुकदेवसंज्ञः ॥१५७॥
मुकुन्दपुत्रः किल पञ्चमोऽयमुद्दामकीर्तिर्जयरामसंज्ञः ।
पुत्रा बभूवुस्त्रय एव तस्य भाव्यं परैः साम्बशिवस्य भक्त्या ॥ १५८ ॥
वेणीरामबुधस्तदीयतनयः श्रीवैजनाथाभिधः
श्रीमान् यादवनामकः पुनरभूत्सूनुस्तृतीयः कृती ।
एवं श्रीजयरामपण्डितसुता ह्येते मया वर्णिता
भाव्यानां गुणवर्णनं सुकृतिनां कर्तुं भवेत्कोऽपि वा ॥१५९॥
वर्णितो न निखिलो मयाऽधुना वंश एष निजपूर्वसम्भवः ।
यो हि सम्प्रति धियाऽनुवर्णितस्तेन तुष्यतु शिवापतिः शिवः ॥१६०॥
श्रीवासुदेवस्य हि नन्दबन्धोरनन्तपुत्रस्य च कृष्णनाम्नः ।
सुतस्य नारायणपण्डितस्य वंशो न विस्तारभयादवार्णि ॥ १६१ ॥
कान्होपण्डितशर्मणः पुनरपि श्रीवामनस्यापि वै
श्रीमन्माधवपण्डितस्य न मया वंशोऽधुना वर्णितः ।
ग्रन्थाधिक्यवशात् सुसन्ततिविधेर्नाशादभावात्परं
केषाञ्चित्स्वकुलोद्भवैकसुधियामज्ञानतश्चापि वा ॥ १६२ ॥

गताः कुटुम्बेन युता विदेशे केचित्तु वन्ध्यापतयोऽपि जाताः ।
मृतात्मजाः केचन संबभूवुर्नातस्तदीयं चरितं ब्रवीमि ॥ १६३ ॥

धूलीकणानपि पुमान् गणयेत्कदाचित्
तारागणैकगणनामपि कोऽपि कुर्यात् ।
धर्माधिकारिकुलसम्भवपण्डितानां
को वा गुणान्निपुणधीर्गणयेदनन्तान् ॥ १६४ ॥

प्रचण्डमार्तण्डकराननन्तान् आखण्डलाखण्डितवारिबिन्दून् ।
विमातुमारादपि कोऽप्यलं स्यान्न चापि कश्चिन्निजवंश्यलोकान् ॥ १६५ ॥

असंख्याताः ख्याताः पुनरपि च जाताः क्षितितले
कुले विद्वद्रत्ने द्विजमनुजधर्माधिकृतिके ।
भवेयुः श्रीशेच्छावशत इति हेतोर्गुरुरपि
प्रभुर्न स्यात्तेषां गणनरचनायां निपुणधीः ॥ १६६ ॥

केचिद् बेदरपत्तने कविवराः केचित्तु जाताः पुनः
श्रीकाश्यां द्विजवृन्दपूज्यतिलकाः केचिद्विदेशे पुनः ।
धर्माणामधिकारिणः समभवन्नातः परं वर्णनं
सर्वेषां सुधिया विधातुमिह वै शक्तो भवेन्मादृशः ॥ १६७ ॥

गणनं निजकुलपुंसां वर्णनयुक्तं समासेन ।
को वा नरः प्रकुर्यात्तरणं यद्वत्समुद्रस्य ॥ १६८ ॥

क्वाऽयं स्वकुलसमुद्रो बुद्धिदरिद्रः क्व चाहं वै ।
श्रीशम्भुभजनयोगात्पूर्णं जातं तथापीदम् ॥ १६९ ॥

वारिधितरणेऽमन्दं मृकण्डुतनयस्य पूर्वमवलम्बः ।
जातो ममापि सोऽयं विरचनकरणे हरिः सततम् ॥ १७० ॥

वेणीरामेण कृतं वर्णनमेतन्मनोहारि ।
त्रिपुरारिपादसेवाविभवेन स्वीयवंश्यानाम् ॥ १७१ ॥

स्वीयकुलोद्भवलोकानन्दायेदं कृतं यस्मात् ।
इह नन्दादिबुधानां कीर्तिर्युक्ता परिस्फुरति ॥ १७२ ॥

बुधजननिकरः स्वान्ते पश्यतु सर्वं च वचनरचनं मे ।
जानातु मत्स्वरूपं नो वा किञ्चिद्विजानातु ॥ १७३ ॥
यत्राभूदिह नन्दपण्डितकवेर्जन्मादिसंकीर्तनं
सोऽयं वंशवरः सतां सुखकरः श्रीकाशिकावासिनाम् ।
वेणीरामबुधेन पूर्वजपदासक्तेन याथार्थ्यतः
श्रीशम्भोर्वरपादपद्मनिरतस्वान्तेन संवर्णितः ॥ १७४ ॥
धर्माधिकारिवंशस्य वर्णनं निजशक्तितः ।
कृतवान् साम्बमानम्य श्रीवेणीरामपण्डितः ॥ १७५ ॥

इति श्रीधर्माधिकारिकुलतिलकायमानश्रीमन्नन्दपण्डितान्वय-
प्रसूतकलाधरपण्डितात्मजश्रीवेणीरामपण्डितविरचितं
स्वपूर्वजवंशगुणवर्णनं सम्पूर्णतामगमत् ॥

---

श्रीविनायकशास्त्रिवेतालकृतम्

# धर्माधिकारिवंशशेषवर्णनम् ।

प्रत्यग्ररचनाशालिधियां विश्राणने प्रभुम् ।
अनेकदं तं भक्तानामेकदन्तमहं भजे ॥ १ ॥
धर्माधिकारिवंशोऽयं श्रीवेणीरामपण्डितैः ।
वर्णितः समये स्वस्मिंस्तच्छेषोऽत्राभिधीयते ॥ २ ॥
श्रीवासुदेवसूनुः श्रीकृष्णः पण्डितः प्रोक्तः ।
तस्य सुता सगुणाख्या सा मे मातामहस्य मातासीत् ॥३॥
तामुपयेमे वेणीरामः शेषोपनामको विद्वान् ।
ताभ्यां राजारामः पण्डित उदभूत्कुले हि शेषस्य ॥ ४ ॥
गङ्गाभिधाऽस्य पत्नी सुषुवे मोरेश्वरं सूनुम् ।
मन्मातरं च लक्ष्मीं वेतालविनायकः सोऽहम् ॥ ५ ॥

श्रुतिप्रमाणं किल कर्म येषां ते यैर्निबन्धैः प्रचरन्ति धर्मम् ।
मन्वादिवाक्यस्मृतिभिर्विमिश्रैर्वंशत्रयात्ते बहुधोदभूवन् ॥ ६ ॥
भट्टकुलं प्रथमं तत्परमिह धर्माधिकारिकुलम् ।
शेषकुलं च तृतीयं काश्यामद्यापि च प्रथमपूज्यम् ॥ ७ ॥
नैयायिकमीमांसकसद्ग्रन्थाः कर्मपद्धतयः ।
प्रायः कुलत्रयेऽस्मिन्नुदयमवापुः परोपकाराय ॥ ८ ॥
कथमपि तत्सन्तानं सन्नहमद्य स्वकीयानाम् ।
नामान्यद्यावधि किल केवलमिह वच्मि तच्चिरस्थित्यै ॥ ९ ॥
बालाजी चिमणाजी नारायण इति सुतत्रितयम् ।
श्रीकृष्णपण्डितस्य त्वासीन्मन्मूलपुरुषस्य ॥ १० ॥
नारायणवंशो नो चिमणाजीतस्तु चत्वारः ।
आसन्सुता इहैको बिष्णुर्घान्नूसमाख्योऽन्यः ॥ ११ ॥
सूनुर्गजाननोऽस्य भ्राता चासीत् सखारामः ।
गङ्गारामस्त्वपरो वंशो निष्ठां जगामैषाम् ॥ १२ ॥
अथ बालाजीसंज्ञाच्चतुष्टयं संबभूव तनयानाम् ।
प्रथमो मुकुन्दशर्मा गोपालोऽन्यो महादेवः ॥ १३ ॥
दामोदरोऽपरोभूत्तस्योदभवंस्त्रयः पुत्राः ।
श्रीधर आत्मारामो गोविन्दश्चेति गोविन्दात् ॥ १४ ॥
यज्ञेश्वर आद्योऽभूत्परौ जगन्नाथरघुनाथौ ।
मन्मातुलदौहित्र्या जज्ञे यज्ञेश्वरात्सुतद्वितयम् ॥ १५ ॥
ते आबडीलहानीसंज्ञे, जज्ञे जगन्नाथात् ।
गणनाथो रघुनाथाज्जयकृष्णः शङ्करश्च स्तः ॥ १६ ॥
अथ बालाजीतनयाच्चत्वारो ये महादेवात् ।
मोरेश्वरचिन्तामणिराजारामा जनार्दनश्चास्मात् १७
कृष्णः समजनि नाम्ने वंश्यः कोऽप्यत्र विदितो मे ।
अथ बालाजीसूनोर्गोपालाज्जज्ञिरे सुता अष्टौ ॥ १८ ॥

नारायणसोनूजीविनायका अथ गणेशोऽन्यः ।
बाबूलक्ष्मणसंज्ञौ सविश्वनाथो हरिश्चेति ॥ १९ ॥
धोंडूसंज्ञा चैषां भगिनी वेहलूकरोपाख्या ।
अत्र हि बाबूपुत्रः कोऽप्यस्ति च तं न जानेऽहम् ॥ २० ॥
गणेशस्य चतुःपुत्रा भोलानाथोऽथ शङ्करः ।
शम्भुः सदाशिवश्चेति ते वसन्ति तु लश्करे ॥ २१ ॥
सोनूजीतनयौ विष्णुर्भीकूपन्तश्च, तत्सुतः ।
छोट्यानामा परेषां तु न वंशो ववृधे भुवि ॥ २२ ॥
बालाजीसंज्ञपुत्रात्तु मुकुन्दाच्च सुतद्वयम् ।
पुरुषोत्तमशर्माऽऽद्यो दाजीपन्तापराभिधः ॥ २३ ॥
काशीनाथोऽनुजस्तस्माद्विश्वनाथश्च माधवः ।
दाजीपन्तस्य पुत्रोऽस्ति लक्ष्मीकान्त इति स्मृतः ॥ २४ ॥
सुता च मत्स्नुषाप्यस्ति लक्ष्मीकान्तस्य केशवः ।
सूनुरेषा तु गोविन्दपण्डितानां कुलस्थितिः ॥ २५ ॥
श्रीनन्दपण्डिताद् यो विद्वद्वर्यात्कुले षष्ठः ।
पुत्रोऽनन्तस्यासील्लक्ष्मीधरपण्डितः काश्याम् ॥ २६ ॥
तस्य सुताः पञ्चासंस्तत्रासीत्सोमनाथाख्यः ॥
स तु दिनकरभट्टसुतामुपयेमेऽस्याः सुतश्चासीत् ॥ २७ ॥
विश्वनाथरघुनाथशम्भवो वासुदेव इति सोदरा इह ।
सोमनाथविदुषोऽन्तिमादभूत्कन्यकाद्वयमतीव बुद्धिमत् ॥२८॥
मैयामथुरासंज्ञं, निःसन्तानोऽत्र रघुनाथः ।
शम्भोस्तु रामचन्द्रस्तस्माच्छ्रीढुण्ढिराजोऽभूत् ॥ २९ ॥
नाम्ना धिया च वृत्त्या श्रीगुरुवरबालशास्त्रिविद्वद्भ्यः ।
शास्त्राण्यधीत्य सर्वाण्यपि विचचाराऽवनौ वाग्ग्मी ॥ ३० ॥
वाराणस्यामस्माद् वीरेश्वर आद्यसूनुरभूत् ।
सोऽल्पायुरभूदन्यो नागेश्वरपण्डितश्चिरायुः स्तात् ॥ ३१ ॥

लक्ष्मीधरः सुतोऽस्य श्रीभगवत्याः प्रसादेन ।
अथ विश्वनाथसंज्ञाज्जज्ञे श्रीवैद्यनाथाख्यः ॥ ३२ ॥
तस्य सुतद्वितयमभूदाद्यः श्रीकृष्णपण्डितस्तत्र ।
साहित्यशास्त्रविज्ञो शब्दार्थचये विलक्षणधीः ॥ ३३ ॥
अकरोज्जनोपकृतये यो वासिष्ठस्मृतिव्याख्याम् ।
सज्जनवर्णनकाव्यं व्याकरणं शिक्षयंश्चक्रे ॥ ३४ ॥
गोविन्दोऽस्यानुज इह सुताद्वयं कृष्णपण्डितस्यास्ति ।
तत्र ज्येष्ठा दुर्गाऽनुजा च गङ्गाभिधानयुता ॥ ३५ ॥
एषा मदीयसुतयोः श्रीनाथाऽनन्तरामयोर्जननी ।
धर्माधिकारिवंशे सम्बन्ध इयान्ममाद्यन्तः ॥ ३६ ॥
अस्मिन्वंशे ये चिरञ्जीविनस्ते विद्यावन्तः शास्त्रनिष्ठा वदान्याः ।
श्रौते स्मार्ते कर्मणि श्रद्धधानाः सन्तः सन्तु श्रीकृपासत्कटाक्षात् ॥३७॥
धर्माधिकारिवंशाग्निः सततं किल्बिषापहः ।
मया समिध्यमानोऽयं सर्वदैव समेधताम् ॥ ३८ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यवर्येत्यादिविविधविरुदावली-
विराजमानैः श्रीमद्द्वारकापीठस्थितश्रीशङ्कराचार्यवर्यैः प्रीत्या
समर्पितया स्वधर्मधुरन्धरदैवज्ञवाचस्पतिरिति सत्पदव्या
श्रीमत्परमहंसेत्यादिविविधपदवीविभूषितैः श्रीकरवीरक्षेत्र-
स्थितश्रीशङ्कराचार्यवर्यैर्मुदा समर्पितया ज्योति-
ष्पारदृश्वेति सत्पदव्या चालङ्कृतेन वेतालो-
पाभिधश्रीविनायकशास्त्रिणा विरचितं
धर्माधिकारिवंशशेषवर्णनं
शुभाय वृद्ध्यै च भूयात् ।



॥ श्रीः ॥

श्रीविनायकशास्त्रिवेतालविरचितम्

# श्रीरेणुकास्तोत्रम् ।

त्वदीयपदरेणुके शिरसि रेणुके ! मामके
निधाय वरदं करं ननु दरं ममाऽनीनशः ।
स्ववत्सलतयाऽनु दोर्नयनलालनच्छद्मना
प्रमोदभरदृग्झरस्रुतमदश्रुभिर्धावयेः ॥ १ ॥

प्रणम्य सुषमामिषद्दृगनिमेषशीर्षोल्लस-
त्किरीटकुलसङ्कुलं परिमलाऽलमङ्घ्र्युत्पलम् ।
मनोऽलिरयमुन्मदः सपदि तेऽनुजिघ्रन् मनाक्
तदन्यसुमनस्सु किं व्रजति नाधुना तत्स्मरन् ॥ २ ॥

भजन्तु विषयान् सजूर्विषयिणो विषाणीव ते
रसारसिकमौलिना मम मनोऽलिना न्यक्कृताः ।
श्रुतं तदवलोकितं भवतु तत्स्पृशाञ्जिघ्रता
रसालपदपङ्कजं जननि ! ते सदा स्वाद्यताम् ॥ ३ ॥

विजित्य हृदुपस्थतो मुहुरुपस्थितानन्दकं
विशुद्धिमुपसंहरन्विरमताद् भवद्भक्तिषु ।
गिरा भजतु नाम ते करधृतार्चनोपस्करं
प्रयातु तव मन्दिरं विसृजतु त्वदन्यादरम् ॥ ४ ॥

मुमोच किल मां प्रसूरथ विद्मणरिग्रजः
पितापि दयितोऽग्रजोऽपर इहाश्रयो यस्य मे ।
अयेऽहमधुनेह कं वृजिनपुञ्जवात्याहतः
प्रयामि दिशमाम्बिके! निदिश कान्दिशीकोऽद्य काम् ॥ ५ ॥

यथायथमनुष्ठिताः स्तुतिकथाः कथञ्चिन्न ते
स्मरामि च कृतं न तेऽर्चनमकिञ्चनः किञ्चन ।
तपो मनुजपोऽप्युपोषणमकारि न त्वत्कृते-
ऽपराद्धममुमम्बिके ! वद किमुद्धरिष्यस्यतः ॥ ६ ॥

विधिर्हरिहरादयो यदवधीरिता नान्तिके
पुरन्दरपुरोगमा न पुर आसितुं शक्नुयुः ।
निगृह्य कृपयाऽम्बिके ! गुणगणैः स्वकीयैर्दृढं
बधान, न यथा पुनः श्रयति हृत्पशुः शोच्यताम् ॥७॥

अगाधवदपारवद्भयमदादियादोयुता
विवेकमुखमत्सखा यदधिवीचि मग्नाः परम् ।
निधाय चरणौ पुरो नियमयाऽऽशु तृष्णानदीं
विनश्यति यथाऽम्बिके! न परमार्थमार्गो मम ॥ ८ ॥

स्तवीमि जमदग्निसद्गृहिणि ! नाम पृथ्वीगतं
गृणन् परशुरामसज्जननि! जल्पितार्थाशये ।
तदम्ब! कृपयाऽऽप्स्यतेऽद्य वयसोनपञ्चाशता
मया, पठति कोऽपि चेत्स फलमाप्नुतात्तादृशम् ॥ ९ ॥

इति श्रीमत्पूज्यपादश्रीविनायकशास्त्रिवेतालविरचितं
श्रीरेणुकास्तोत्रं सम्पूर्णम् ॥